B-3

# त्रिपुरासारसमुच्चयः

श्रीनागभट्टविरचितः

श्रीगोविन्दाचार्य कृत व्याख्यया समलंकृतः

सम्पादकः

**राम कुमार राय**



प्राच्य प्रकाशन. वाराणसी

# त्रिपुरासारसमुच्चयः

( तन्त्रशास्त्रम् )

श्रीनागभट्टविरचितः

श्रीगोविन्दाचार्य कृत व्याख्यया समलंकृतः

सम्पादकः

**राम कुमार रायः**




**प्राच्य प्रकाशन**

जगतगंज, वाराणसी-२२१ ००२

१९८३

## PREFACE

At present no work containing the procedural details of the worship of Tripurā is available. The third part of famous Tripurārahasya, known as Caryākhaṇḍa and containiug such material, is now lost. Several other works on the subject are still in Manuscript form lying in various libraries. Under the circumstances the major work containing procedural details for the worship of Tripurā is the Tripurāsārasamuccaya. Unfortunately only once printed almost a century back, this work too had been out-of print for the last fifty years. We have therefore decided to publish its Text and the most important and comprehensive of its commentaries by Govindācārya.

Tripurāsārasamuccaya claims to give an exposition of the procedures for the worship of Tripurā on the basis of Teachings of the Tradition of Gurus. The authoritativeness of the work is evident from the fact that it has been profusely quoted and referred to by works like Tārābhakti-śudhārṇava, Puraścaryārṇava, Lalitārcana-candrikā, Tantrasāra, and Raghunandana's Tīrthatattva. A brief summary, which may convey an idea of the range of material treated in it, is as follows :

First Chapter deals with the kinds of worship, Bhūtaśudhi, Ātmadhyāna and Dhyāna of various other Deities, such as, Yama, Kubera, Trailokyajananī, and Trailokyamātṛkā.

Second Chapter elucidates the methods of various Nyāsas, such as Aṅga-nyāsa, Vidyā-nyāsa, Kāma-nyāsa, etc. Thereafter it lays down the method of extrication of Bījaś and description of their Śaktis. After introducing the Bhairavī and Vidyā it also treats the subject of Japa and Siddhis.

Third Chapter deals with various Prāṇas, Nāḍīs, Rise of various Elements in the Svaras and conquest of Prāṇa.

Fourth Chapter contains description of Mudrās, method of piercing the Brahmagranthi, and wakening of the Kuṇḍalinī.

Fifth Chapter contains description of Ṣaṭcakras and the fruits obtained by concentrating on various Cakras.

Sixth Chapter contains Dhyānā of Svayaṁbhūliṅga, method of Tāntrika Homa, Vagīśvarīdhyāna and Japa.

Seventh Chapter describes the Mantra and Yantra of Tripurā.

Eighth Chapter describes the places of worship, Dravyaśuddhi, Pātraśuddhi, worship of Line of Gurus, and worship of several other Deities.

Ninth Chapter contains technical details for the construction of Yajña-kuṇḍa and Dīkṣā-maṇḍapa etc.

Tenth Chapter deals with various ritualistic details connected with the worship of Goddess Tripurā.

We hope that our present effort would fulfil a long standing need for an authoritative work dealing with the worship of Goddess Tripurā.

Editor

# त्रिपुरासारसमुच्चयस्य सूचीपत्रम्

# त्रिपुरासारसमुच्चयः

## प्रथमः पटलः

प्रह्वप्राचीनबर्हिःप्रमुखसुरवरानीककोटीरकोटि-
श्लिष्टस्पष्टेन्द्रनीलामलमणिमधुपश्रेणिजुष्टं कृपीष्ट ।
श्रीपादाम्भोजयुग्मं नखमुखविलसद्रश्मिकिञ्जल्कपुञ्जम्
शिञ्जन्मञ्जीरहंसीमुखरितमनिशं मङ्गलं वो भवान्याः ॥ १ ॥

---

नत्वा शङ्करचरणं श्रीमद्गोविन्दशर्मणा ।
त्रिपुरासारटीकेयं रच्यते सारदृश्वना ॥

तस्यै दिशे सततमञ्जलिरेष पौष्यः प्रक्षिप्यते मुखरितो मधुरैर्द्विरेफैः ।
जागर्त्ति यत्र भगवान् गुरुचक्रवर्त्ती विश्वोदयप्रणयनाटकसूत्रधारः ॥

श्रीमद्गुरुपरमेश्वरपदारविन्दप्रणिहितभक्तिभरावनम्रशिरसा परमाचार्यपरस्परप्रसादलब्धविज्ञानेन सर्वागमपारावारपारगतेन विज्ञानदैशिकेनाचार्य नागभट्टेन विरचितस्य त्रिपुरासारसमुच्चयस्य सम्प्रदायदीपिका व्याख्या आरभ्यते। तत्र सदाचारानुमितश्रुतिबोधनं परदेवतास्मरणपूर्वकमाशीर्लक्षणं शिष्यशिक्षार्थं निबध्नन्नाह प्रह्वप्राचीनबर्हिरित्यादि। भवान्याः श्रीपादाम्भोजयुग्मं वो युष्माकं मङ्गलं कृपीष्ट करोतु। कीदृशं प्रह्वप्राचीनबर्हिः प्रमुखसुरवरानीक कोटीरकोटिश्लिष्टस्पष्टेन्द्रनीलामलमणिमधुपश्रेणीजुष्टं प्राचीनबर्हिः प्राच्यधिप-‍ स्तत्प्रमुखास्तत्प्रधाना ये प्रह्वा नम्रीभूता ये देवश्रेष्ठास्तेषां यः समूहः तस्य मुकुटसम्बन्धी व्यक्तीभूतो यः इन्द्रनीलामलमणिः स एव भ्रमरः तस्य पंक्त्या ...था युक्तम्। अम्भोजद्योतनमाह नखमुखेत्यादि। नखानां मुखे विलसन् ...द्रश्मि तदेव किञ्जल्कसमूहो यस्य तादृशम्। पुनः कीदृशं शिञ्जन्मञ्जीरहंसीमुखरितं शब्दायमानम् ॥ १ ॥

भक्त्या गुरोर्भवपयोनिधिसेतुहेतून् श्रीपादपद्मयुगरेणुकणान् प्रणम्य ।
लम्बोदरञ्च कथयामि गुरूपदिष्टमाराधनक्रममहं कुलनायिकायाः ।२

स्नात्वा यथाविधि विधौतकराननांघ्रिः
आचम्य सम्यगमलाम्बरयज्ञसूत्रः ।
प्रगाननो धनददिग्वदनोऽथ वापि
वद्धासनी गणपतिञ्च गुरुञ्च नत्वा ॥ ३ ॥

संयोज्य जीवमथ दुर्गममध्यनाडीमार्गेण पुष्करनिविष्टशिवे सुसूक्ष्मे ।
हंसेन देहममरेन्द्रपुरोगतेन सार्द्धेन्दुना भसितसाद्विदधीत मन्त्री ॥४

---

इष्टदेवतां नमस्कृत्य गुरुनमस्कारमाह भक्त्या इति । गुरोः पादपद्म-रेणुकणान् प्रणम्य लम्बोदरञ्च प्रणम्य कुलनायिकाया आराधनविधिं कथयामि । कीदृशान् तान् संसार एव पयोनिधिर्दुस्तरत्वात् तदुत्तरणे सेतुहेतून् लीलातरणहेतून् । आराधनक्रमं कीदृशं गुरुणोपदिष्टं विना आगम-ज्ञानानर्थक्यप्रसङ्गात् । तस्माद्गुरुदेवतयोरैक्यं कर्त्तव्यम् । तदुक्तं यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन इति ॥ २ ॥

गुरुदेवतादि नमस्कृत्य उपासनाप्रकारमाह स्नात्वेति । नद्यादौ यथा-विधि स्नात्वा सन्ध्यावन्दनादिकं कृत्वा यथाविधि आचम्य प्रकृष्टनिर्मलयज्ञ-सूत्रः सन् पूर्वाभिमुखः यथायोग्यं मृद्वासने स्वस्तिकासने वा उपविश्य वामे गुरुं दक्षिणे गणेशं मध्ये इष्टदेवतां नत्वा वक्ष्यमाणभूतशुद्धिं विदधीत । दुर्गममध्यनाडीमार्गेण सुषुम्नान्तर्वर्त्तिना चित्रामार्गेण पुस्करनिविष्टशिवे सहस्रदलकमलकूटस्थपरमात्मनि जीवं जीवात्मानं संयोज्य अत्र ग्रन्थान्तर-स्वरसवशाच्चतुर्विंशतितत्वान्यपि तत्र नयेत् । हंसेन हंस इति मन्त्रेण अमरेन्द्रपुरोगतेन सार्द्धेन्दुना अमरेन्द्रा लकारः तत्पुरोगतोरेफः अर्द्धेन्दुविन्दु-स्तेन रमिति मन्त्रेण स्वकं स्वशरीरं भसितसात् भस्मसात् कुर्यात भस्मीभूतं स्वशरीरमिति चिन्तयेदित्यर्थः ॥ ३-४ ॥

सास्यादिनाथ मरुताऽपनयन्नशेषम्
तद्भस्मराशिमखिलं भुवनं सकेन ।
सम्प्लावयन् वलभिदा परिचिन्तयेत्
स्वमात्मानमम्भसि घटेन सबिन्दुकेन ॥ ५ ॥
ततो बृहद्बुद्बुदमध्यवर्त्तिस्फुरत्प्रभामण्डलमण्डभाजम् ।
ध्यात्वा तदन्तर्भुवनान्यमूनि विचिन्तयेद्भूतलमेतदन्तः ॥६॥
स्मितप्रसवशोभितं नवमनिन्द्यगन्धोत्कटम्
कदम्बवनमुच्चकैरिह समन्ततश्चिन्तयेत् ।
तदन्तरपि मुण्डितं मणिगणैर्महामण्डपम्
हिरण्मयमुपाञ्चितं द्युमणिमण्डलाभप्रभम् ॥ ७ ॥
चतुर्द्वारोपेतं मणिमयचतुस्तोरणयुतम्
स्फुरत्तारानाथद्युतिसितवितानाङ्कमुपरि ।

---

सास्यादिनाथ मारुतेति सास्यं विसर्जनीयस्यादिर्बिन्दुः मरुत् यकारः तेन यमिति वायुबीजेन भस्मराशिं निराकुर्वन् सानुस्वारेण बलभिद्बीजेन लकारेण सकलं भुवनं प्लावितं कुर्वन् स्वमात्मानं अमृतमयाम्भसि सानुस्वारेण घटेन चिन्तयेत् । घटशब्देनाधिष्ठानलक्षणया जलं लक्षितम् । तेन च तद्बीजेन वकारेण सानुस्वारेणामृतमयाम्भसि आत्मानं ध्यायेदित्यर्थः ॥ ५ ॥

तत इति । तदनन्तरं तज्जलवेगमध्यवर्त्तिस्फुरद्दीप्तिसमूहं ब्रह्माण्डं ध्यायेत् । तदभ्यन्तरे चतुर्दश भुवनानि तेषामभ्यन्तरे भूमितलं विचिन्त्य तन्मध्ये कदम्बवनं चिन्तयेत् । कीदृशं कदम्बवनं प्रकाशकुसुमशोभितं नवं नूतनम् अनिन्द्यगन्धोत्कटं स्पृहणीयसौरभशालि सर्वतो महत्कम्बवनं तद्वनाभ्यन्तरे मणिभिर्भूषितं सौवर्णमहामण्डपं सूर्यमण्डलाभदीप्तं चिन्तयेत् ॥ ६-७ ॥

कीदृशं चतुर्द्वारैर्युक्तं मणिमयैश्चतुर्भिस्तोरणैः सहितम् । स्फुरन्ती या शशिदीप्तिस्तद्वत् सितेन वितानेनोपरि चिह्नं यस्य मण्डपस्य तम् । प्रतिद्वारं सपरिवारौ गणेशक्षेत्रपालौ स्थिताविति चिन्तयेत् ॥ ८ ॥

स्थितौ द्वारे द्वारे रुचिरमणिमाल्याम्बरधरो
गणेशक्षेत्रेशौ च सपरिकरौ यस्य महितौ ॥ ८ ॥
पूर्वद्वारि सवाहनं हरिहयं तस्यैव याम्ये यमम्
पाश्चात्ये वरुणं तथैव तदुदग्द्वारे कुबेरं स्थितम् ।
सङ्गीतादिरतैस्तदन्तरमरस्त्रीणां गणैराकुलम्
ध्यायेत् सम्यगनाकुलेन मनसा गन्धर्वमुख्यैरपि ॥ ९ ॥
तस्य मध्यगतसिंहविष्टरे पद्ममष्टदलशोभितं ततः ।
उद्यदुष्णकरमण्डलोज्ज्वलं चिन्तयेदरुणचारुकेशरम् ॥ १० ॥
तत्कर्णिकोपरि कपञ्चममम्बुतुर्ययुक्तं
मनुस्वरतदन्तयुतं विधाय ।
प्रेतं धिया तदुपरि त्रिदशेन्द्रवन्द्याम्
ध्यायेत्त्रिलोकजननीं दयितां पुरारेः ॥ ११ ॥

---

पूर्वेति । तस्य मण्डपस्य पूर्वद्वारि ऐरावतसहितमिन्द्रं ध्यायेत् । दक्षिणद्वारि महिषसहितं यमम् । पश्चिमद्वारि मकरसहितं वरुणम् । उत्तरद्वारि नरयानं कुबेरं ध्यायेत् । सवाहनानुकपि सकलान्वयि यदभ्यन्तरं नृत्यादिरतैः अमरस्त्रीसमूहैः व्याप्तं चिन्तयेत् । गन्धर्वकुलैरप्याकुलं चिन्तयेत् ॥ ९ ॥

तस्येति । तस्य मण्डपस्य मध्यस्थितसिंहासने अष्टदलपद्मं चिन्तयेत् । कीदृशं पद्मं प्रातःकालीनसूर्यविम्बतुल्यम् अरुणमित्यर्थः तथा अरुणं लोहितं मनोहारि च किञ्जल्कं यस्य ॥ १० ॥

तदिति । तस्याष्टदलकर्णिकाया उपरि हेसौं इत्यासनवीजं विधाय तदुद्धारणप्रकारमाह कं जलं तद्वीजं वकारः तत्पञ्चमो हकारः अम्बु रकारः तत्तुर्यः सकारः तेन युक्तं मनवश्चतुर्दश तदुपलसंख्यकस्वर औकारः तदन्तः अङ्कारः ताभ्यां युक्तम् एतावता हेसौं इति भवति । एतदेवासनवीजं देव्याः तदुपरि प्रेतं शिवरूपं विचिन्त्य तस्योपरि त्रिलोकमातरं हरवल्लभां ध्यायेद् ॥ ११ ॥

सुरुचिरनासिकां सुनयनां सुकपोलतला-
मरुणजटाकलापकलितामलचन्द्रकलाम् ।
विलसदष्टमीन्दुकमनीयललाटतटाम्
परिणतशारदेन्दुरुचिनाननपङ्करुहाम् ॥ १२ ॥
बन्धूकारुणकान्तिदन्तवसनासुतुङ्गवृत्तस्तनीम्
युक्तां बालमृणालनाललालितैर्भव्यैश्चतुर्भिर्भुजैः ।
तत्कालस्मितपद्मपत्रविलसन्नेत्रत्रयोद्भासिताम्
ताराधीशदिनेशकुण्डलधरामुल्लासिचिल्लीलतीम् ॥ १३ ॥
वलित्रयोद्भासितदीनमध्यां प्रदक्षिणावर्त्तं गभीरनाभीम् ।
कस्तूरिकाकर्दमलेखयेव विराजमानामपि रोमराज्या ॥ १४ ॥
स्मितनवबन्धुजीवकुसुमारुणसद्वसनाम्
मणिमयरसनाकलापकलितोरुनितम्बतटाम् ।
करिकरपीवरोरुयुगलां वरहंसगतिम्
चरणतलप्रभाविजितपङ्कजगर्भदलाम् ॥ १५ ॥

---

ध्येयदेवीस्वरूपमाह सुरुचिरेत्यादि । अरुणजटासमूहनिबद्धचन्द्रषोडशभागां तथा प्रदक्षिणावर्त्तगभीरनाभीं प्रदक्षिण आवर्त्तः भूमिर्यस्याः तादृश्या नाभ्या युक्तं कस्तूरिका कर्दमरेखातुल्यया रोमराज्या युक्तं स्मितनवबन्धूककुसुमारुणसद्वसनां विकसितबन्धूककुसुमारुणवस्त्रां मणिमयरसनाकलापकलितोरुनितम्बतटां मणिमयक्षुद्रघण्टिकासम्बन्धकटिदेशां करिकरपीवरोरुहस्तयुगलां हस्तिशूलहस्तजघनां चरणतलप्रभाविजितपङ्कजगर्भदलां गर्भोऽभ्यन्तरं प्रणतपुरन्दरप्रमुखलेखनिकायलसन्मणिमुकुटप्रभापटलपाटलितांघ्रियुगां नम्रीभूतेन्द्रोपक्रमदेवसमूहदीप्यन्मणिमुकुटदीप्तिसमूहश्वेतरक्तपदद्वयां मणीनां नानाविधत्वाद्दीप्तेः पाटलत्वम् । सुरुचिरेति । अतिमनोहारिसन्ध्याकालोनाम्बुददीधितिसमूहजुषा सेवितेन निजतनुतेजसा स्वशरीरतेजसा कवलितं व्याप्तं

प्रणतपुरन्दरप्रमुखलेखनिकायलसन्
मणिमुकुटप्रभापटलपाटलितांघ्रियुगाम् ।
सुरुचिरसान्ध्यवारिधरकान्तिकलापजुषा
निजतनुतेजसा कवलिताम्बरदिग्वलयाम् ॥ १६ ॥
दिव्याम्बुवाहनिवहोदरमुक्तवृत्तमुक्ता
फलैर्विरचितां रुचिरां वहन्तीम् ।
एकावलीममलकोमलकान्तियुक्ताम्
कान्ते गले च हरिचन्दनलिप्तगात्राम् ॥ १७ ॥
पाशांकुशाभयवरोद्यतपाणिपद्माम् रत्नप्रकाण्डरचिताभरणभिरामाम् ।
स्मेराननां रुचिरदंतमरीचिवीचि धौतारुणाधरदलां सुरवृंदवन्द्याम् १८
स्वैक्येन त्रिभुवनमातरं मृडानीम्
ध्यात्वेवं निजकुलकामधेनुमेनाम् ।
हृत्पद्मं पुनरपि जीवमानयेत् स्वम्
आकाशाम्भोरुहकुटीरनिविष्टहंसात् ॥ १९ ॥

इति श्रीनागभट्टविरचिते त्रिपुरासारसमुच्चये
प्रथमः पटलः ॥

---

दिग्वलयञ्च यया ताम् । दिव्याम्बुवाहेति दिव्यमेघसमूहोदरनिर्गतं-मुक्ताफलैर्विरचितां रुचिरां मनोहारिणी एकावलीम् । को मस्तकस्तस्यान्ते गले वहन्तीं अथवा कान्ते कामनीये गले । पाशांकुशे ऊर्ध्ववामदक्षहस्ताभ्यां वराभये अधःकराभ्यां दधानाम् । रत्नप्रकाण्डरचिताभरणाभिरामां रत्नप्रकाण्डं रत्नश्रेष्ठस्तेनरचितानि यान्याभरणानि तैरभिरामां मनोहराम् । रुचिरदन्त-मरीचिवीचिधौतारुणाधरदलां रुचिरा मनोहरा ये दन्तानां मरीचयो रश्मय-स्तेषां वीचिभिस्तरङ्गरूपैर्धौतं निर्मलीकृतम् अरुणाधरपल्लवं यस्याः ताम् । सुरवृन्दैर्देववृन्दैर्वन्द्यां सेविताम् स्वैक्येनेति एनां त्रिभुवनजननीं भवानीं

# द्वितीयः पटलः

अङ्गुष्ठादिकनिष्ठकावधिकरद्वन्द्वाङ्गुलीषु न्यसेत्
बाणान् पञ्च गुरूपदिष्टविधिना ब्रूमो वयं तानिह ।
अद्रीशो मुखवृत्तवह्निसहितस्त्वाद्यं सदण्डस्त्रिमूर्त्या-
क्रान्तानवृत्तमेव खलु तद्बीजं द्वितीयं भवेत् ॥ १ ॥
मुखान्तस्थितं देवराजाधिरूढं सवामेक्षणं वक्त्रपूर्वेण युक्तम् ।
भपूर्वं सवृत्रारिषष्ठस्वरार्द्धक्षपेशं कतुर्यं कपूर्वेण युक्तम् ॥ २ ॥

---

स्वैक्येन आत्मैक्येन विचिन्त्य पुनरपि जीवात्मानम् आकाशपद्मकुटीरनिविष्ट-परमात्मनः सकाशात् स्वीयं हृत्कमलम् आनयेत् । हंस इति मन्त्रेण चतुर्विंशतितत्वान्यपि स्वं स्वं स्थानं नयेत् इत्यन्यग्रन्थस्वरसात् । इति भूतशुद्धिः ॥ १२-१९ ॥

इति त्रिपुरासारसमुच्चयटीकायां प्रथमः पटलः ॥

एवं भूतशुद्धिं विधाय परदेवतास्वरूपमात्मानं बुद्ध्वा वक्ष्यमाणं न्यासजालं विदधते इत्याह अंगुष्ठेत्यादिना । अंगुष्ठोपक्रमकं कनिष्ठान्तं हस्तद्वयांगुलीषु बाणान् न्यसेत् । ते च द्रावणक्षोभणवशीकरणमारणमोहनाः पञ्च बाणाः तेषां बीजान्याह क्रमशः । अद्रीश इति । अद्रीशोदकारः मुखवृत्तः न्यस्तव्याकारः वह्नीरेफः ताभ्यां सहितोऽद्रीश आद्यं बीजं भवेत् सदण्डः सानुस्वारः तेन द्रामिति बीजं भवति तदेव बीजं त्रिमूर्त्या ईकारेण आक्रान्तम् अनेन स्थानं यस्य तत् द्वितीयबीजं भवति एतावता द्रीमिति भवति ॥ १ ॥

तृतीयबीजमुद्धरति मुखेति । मुखं न्यस्यत इति मुखं विसर्गः तदन्तः ककारः तदुद्धरेत् । कीदृशं देवराज इन्द्रः तद्बीजं लकारः तदुपरि स्थितं वामचक्षुषि न्यस्तते इकारः तत्सहितं वक्त्रे न्यस्तते यो विसर्गः तत्पूर्वो विन्दुः तेन युक्तम् एतावता क्लीमिति बीजं भवति । चतुर्थमुद्धरति भपूर्वो

न्यस्याङ्गान्यपि चाङ्गुलीषु करयोः स्थित्या कलान्यासकम्
कुर्यात् साधकपुङ्गवो भगपरं माया कुलान्तं क्रमात् ।
बीजानां त्रयमर्द्धचन्द्रसहितं विन्यस्य मूर्ध्नि स्वके
सानन्तं मुखवृत्तके कगतकं संवर्त्त कं विन्यसेत् ॥ ३ ॥
सूक्ष्मादींश्चतुरो युगे नयनयोर्न्यस्येत्ततः श्रोत्रयोः
सार्द्धेन्दून् स्वकपोलयोर्भृगुयुगं घ्राणद्वयेनान्वितम् ।
चन्द्रार्द्धाङ्कितमस्तकञ्च चिबुके श्वेतद्वयं विन्यसेत्
पश्चाद्गण्डयुगान्वितं शशिकुलोपेतोत्तमाङ्गं बुधः ॥ ४ ॥
दन्तपंक्तियुगले वकद्वयं सेन्दुखण्डरदनच्छदद्वयम् ।
ओष्ठयोर्घटयुगं ततो न्यसेद्दन्तयुग्ममुखपूर्वसंयुतम् ॥ ५ ॥

---

वकार: वृत्रारिणा लकारेण षष्ठस्वर ऊकारस्तेन च सहितम् एतावता व्लूमिति बीजं भवति । पञ्चमबीजमुद्धरति कं जलं तद्बीजं वकार: तत्तरीय: सकार: ककारपूर्वो विसर्ग: तेन सहितम् एतावता स इति भवति । सर्वत्र बीजं भवेदित्यनुषङ्गः ॥ २ ॥

न्यस्येति । स्थितिन्यासोक्तविधिना उभयकरांगुलीषु करतलयोश्च विन्सयेत् । न्यासो हि ब्रह्मचारी गृही मुमुक्षुरित्यधिकारिभेदात् सृष्टिस्थिति-संहारात्मना त्रिविधः मध्यमादि कनिष्ठान्तं न्यसेत् प्राहुरिमां स्थितिम् । अंगुष्ठान्तं कनिष्ठादि सृष्टिन्यासोऽभिधीयते । अंगुष्ठादि कनिष्ठान्ततं संहार-न्यास ईरितः । नाभ्यादिकेशपादान्तं स्थित्या देहे न्यसेत् सुधीः । केशादि-पादपर्यन्तं सृष्टिन्यासोऽभिधीयते । पादादि केशपर्यन्तं संहारन्यास ईरितः । एवं यथाधिकारं विन्यस्य वक्ष्यमाणकलान्यासं कुर्यात् । तमेवाह भग एकार: तत्परम् ऐकारः माया भुवनेशीबीजं ह्रीं । कुलान्तं कुलविद्याया: अन्तं सौः इति । साम्प्रदायिकास्तु अकुलान्तम् अकुलोऽकारः तस्यान्तं क्षकार इति वदन्ति । एतद्बीजत्रयं स्वके मूर्ध्नि न्यसेत् । सानन्तं मुखवृत्तके इति

रसं नाभावर्द्धोडुपयुतममुं न्यस्य पवनम्
न्यसेन्मन्त्री सान्त्यस्वरमपि शिखायामवहितः ।
कलान्यासं कुर्वन्नमुमिह यथोक्तेन विधिना
चिरं जीवत्यद्धा विगतगदमृत्युः सुखमिह ॥ ६ ॥

पश्चाद्देहे केवला मातृका वा विन्यस्तव्या रुद्रशक्त्यान्विता वा ।
विद्यान्यासं साधकेन्द्रस्ततोऽङ्गन्यासं चास्य न्यासपूर्वं विदध्यात् ।७
विद्यान्यासं मूलमन्त्रस्य वर्णैः कुर्यान्मन्त्री वक्ष्यमाणक्रमेण ।
आद्यं विजं मूर्ध्नि गुह्ये द्वितीयं तार्त्तीयं वा विन्यसेत् हृत्प्रदेशे ॥८॥

संवर्त्तकं क्षकारः सानन्तम् आकारयुक्तं क्षगतं के शिरसि गतं विन्दुरित्यर्थः ।

---

तेन क्षामिति मुखवृत्तके न्यसेत् ॥ ३ ॥

सूक्ष्मादीनिति । सूक्ष्म ईकारः स एव आदिर्येषां ते सूक्ष्मादयः । सार्द्धेन्दून् सविन्दुकानित्यर्थः । तेन इं ईं उं ऊं इति नयनयोः श्रोत्रयोश्च न्यसेत् । स्वकपोलयोर्भृगुयुगं सकारयुगं घ्राणद्वयेनान्वितं ऋ ॠ इत्यनेनान्वितं सृं सॄं इत्यर्द्धचन्द्रान्वितं स्वकपोलयोर्न्यसेत् । चिवुके श्वेतद्वयं श्वेतः घकारः गण्डयुगं ऌ ॡ शशिकुल विन्दुः विन्दु शिरस्कं तेन घॢं घॣं इति वीजद्वयं चिवुकपार्श्वयोर्न्यसेत् ॥ ४ ॥

दन्तपंक्तियुगले वकद्वयं शकारद्वयम् । इन्दुखण्डोविन्दुः सविन्दुकं वदनच्छदद्वयम् ए ऐ विन्दुसंहितमित्यर्थः ॥ तेन शें शैं इति दन्तपक्त्यो न्र्यसेत् । ओष्ठयोर्घटयुगं घटो वकारस्तद्द्वयं दन्तयुगम् ओ औ मुखं विसर्जनीयः तत्पूर्वो विन्दुः सविन्दुकमित्यथः रों इति बीजद्वयं ओष्ठयोर्न्यसेत् ॥ ५ ॥

रसं नाभाविति । रसोरेफः अर्द्धोडुपोविन्दुः तेन रमिति नाभौ न्यसेत् । पवनं यकारः अन्त्यस्वरो विसर्जनीयः । तेन यमिति शिरसि न्यसेत् । अवहितः सावधानः इति षोडशकला न्यसेत् । न्यासफलमाह—अमुं न्यासं कुर्वन् उक्तविधिना असौ साधकः रोगमृत्युरहितः सुखं यथा स्यात्तथा आध्यात्मतत्त्वेन जीवति ॥ ६ ॥

सव्यापसव्येक्षणयोर्ललाटे बीजत्रयं श्रोतयुगे च वक्त्रे ।
अंशद्वये चापि च पृष्ठवंशे बीजत्रयं कर्पूरयोश्च नाभौ ॥ ९ ॥
बीजत्रयेणैव षडाननानि प्रकल्पयेदूर्ध्वं मुखादि विद्वान् ।
अङ्गानि मूलेन च गुह्यनाभिहृद्वक्त्रमूर्द्धस्वपि पञ्च बाणान् ॥ १० ॥
ललाटदेशे वदने हृदि स्वे नाभौ च गुह्येऽपि च विन्यसेत्तान् ।
त्रैलोक्यसंक्षोभणदृष्टशक्तीन् पञ्चापि कामानपि वक्ष्यमाणान् ॥११॥
इह कामराजमन्मथकन्दर्पमकरकेतनाश्चापि ।
नामभिरेतैर्गदिता मनोभवेनान्विताः क्रमशः ॥ १२ ॥

---

षोडशकलान्यासानन्तरं मातृकां केवलां रुद्रशक्त्यान्वितां वा यथास्थानं न्यसेत् । रुद्राः श्रीकण्ठादयः शक्तयः पूर्णोदर्यादयः । न्यासस्थानानि शारदायाम् । ललाटमुखवृत्ताक्षिश्रुतिघ्राणेषु गण्डयोः । ओष्ठदन्तोत्तमाङ्गास्यदोः पत्सन्ध्यग्रकेषु च । पार्श्वयोः पृष्ठतो नाभौ जठरे हृदयेऽशंके । ककुद्यंसे च हृत्पूर्वं पाणिपादयुगे तथा । जठराननयोर्न्यस्येन्मातृकावर्णान् यथाक्रमात् । त्वगसृङ्मांसमेदोऽस्थित मज्जाशुक्रात्मकान् विन्दुः । यादीन् हादीन् न्यसेदात्मपरमज्ञानपूर्वकान् । प्रयोगस्तु--अं श्रीकण्ठपूर्णोदरीभ्यां नमो ललाटे । इत्यादि । ततोऽनन्तरं विद्यान्यासं कुर्यात् ॥ ७ ॥

विद्यान्यासप्रकारमाह विद्येति । कथ्यमानप्रकारेण मूलमन्त्राक्षरैर्विद्यान्यासं कुर्यात् । प्रथमं बीजं मस्तके द्वितीयं गुदे तृतीयं हृदये न्यसेत् । इत्येको न्यासः ॥ ८ ॥

सव्येति । वामदक्षिणनेत्रयोराद्यं द्वयं तृतीयं ललाटे अन्यः । कर्णयुगे । वक्त्रे चैकन्यासः । अंसद्वये पृष्ठे च एको न्यासः । जानुयुगे नाभौ च एको न्यासः । ऊर्ध्वाधोदक्षिणवक्त्रे च एको न्यासः । तथा वामापरमध्यवक्त्रेषु एकः । एवं सप्तमूलविद्यां न्यसेदिति ॥ ९ ॥

बीजत्रयेणेति । मूलमन्त्रबीजैस्त्रिभिर्द्विरुक्तैः षडङ्गानि प्रकल्पयेत् । तदुक्तं त्रिपुरार्णवे--ऊर्ध्वादि परवक्त्रान्तं विद्यान्यासं समाचरेत् । ऊर्ध्वे पूर्वे

कपञ्चमं शुचिनयनान्तसंयुतम् सवामदृक्पवनगुणान्वितः करः ।
रविस्वरो हरिहयविष्णुषष्ठवद् वलं ततस्तर उपरान्वितो भृगुः ॥१३
तेषां शिरःसु विदधीत बुधोर्द्धचंद्रानेवं मया निर्गदिताः खलुपंच कामाः।
पुंसः स्मराननुदिनं न्यसतः स्वदेहे लोकत्रयं भवति तस्यम नोऽनुवृत्तिः
अथ त्रिलोकार्चितशासनया वक्ष्यामि वीजत्रयमम्बिकायाः ।
गोप्तव्यमेतत् कुलधर्मविद्भिरामुष्महेतोर्निजसिद्धये च ॥ १५ ॥
कान्तादिभूतप्रदगं कगतार्द्धचन्द्रम्
दन्तान्तपूर्वजलधिस्थिवर्णयुक्तम् ।

---

तथा वामे पृष्ठे दक्षे तथा क्रमादिति । गुह्यनाभीति । गुह्यनाभिहृदयाननमूर्धसु तूर्वोक्तवाणपञ्चकं न्यसेदिति ॥ १० ॥

कामन्यासमाह लालटेति । वक्ष्यमाणान् पञ्च कामान् ललाटादिपूक्तस्थानेषु न्यसेत् ॥ ११ ॥

तान् कथयति इहेति । एते पञ्च कामाः नानभिः कथिवाः ॥ १२ ॥

एषां वीजानि कथयति कपञ्चमगिति । कं जलं तद्बीजं वकारः तत्पञ्चमो हकारः शुचिना अग्निवीजेन रेफेण नयनान्तेन ईकारेण च युक्तं तेन ह्रीमिति भवति । इति प्रथमवीजम् । वामदृक् ईकारः पवनो यकारः तद्गुणाक्षरं तृतीयाक्षरं लकारः करः ककारः । ककारलकारेकारैः कामाख्यं वीजं द्वितीयम् । रविस्वरः द्वादशस्वरः ऐकारः तृतीयं वीजम् । हरिहयो लकारः विष्णुः रकारः ततः षष्ठस्वर ऊकारः । वलं वकारः वकारलकारोकारैश्चतुर्थम् । एतावता ब्लूमिति । तर इति स्वरूपं उपरः ईकारः भृगुः सकारः सकारतकाररेफेकारैः पञ्चमं तेन स्त्रीमिति ॥ १३ ॥

तेषां शिरःसु विदधीत बुधोऽर्द्धचन्द्रानिति । एतानि वीजानि प्रत्येकं विन्दुभिः कामराजमन्मथकन्दर्पमकरकेतनमनोभवनामभिः संयोज्य न्यसेदित्यर्थः ॥ १४-१५ ॥

एतज्जपन्नवरो भुवि वाग्भवाख्यम्
वाचां सुधारसमुचां लभते स सिद्धिम् ॥ १६ ॥
कान्तान्तं कुलपूर्वपञ्चमयुतं नेत्रान्तान्वितम्
कामाख्यं गदितं जपन्मनुवरं साक्षाज्जगत्क्षोभकृत् ।
दन्तान्तेन युतं सदन्ति सकलं संमोहनाख्यं कुलम्
सिध्यत्यस्य गुणाष्टकं स्वररता सिद्धिश्च नित्यं जपेत् ॥ १७ ॥
ऋषिर्दक्षिणामूर्त्तिसंज्ञो महात्मा भवेच्छन्द एतस्य मन्त्रस्य पंक्तिः ।
सरस्वत्यप्रभावा प्रदिष्टा बुधैर्देवता देववृन्दार्चिताङ्घ्रिः ॥१८॥

---

कान्तादिभूतपदगमिति । ककारोऽनुस्वारः स एवान्तो यस्यौकारस्य तस्यादिभूतपदगम् आदिचतुर्दशपदगम् अकारः यत्राकान्तो विसर्गस्तस्यादि-भूतपदगम् आदौ स्थितं यत् स्वरूपमकारः तमुद्धरेत् । कगतार्द्धचन्द्रो यस्य तादृशं शिरोगतानुस्वारमित्यर्थः । दन्त ओकारः तदन्त औकारः तत्पूर्वजल-धिस्थितवर्णयुक्तं तत्प्रातिलोम्येन चतुर्थमक्षरं एकारः कगतार्द्धचन्द्रं सविन्दुक-मित्यर्थः । एतैः सहितायां वृद्धौ सत्यां ऐं इति वाग्भवाख्यो महान् मन्त्र उद्धृतः । एतद्वाग्भवनामकं बीजं जपन् अशेषामृतमयीं वाक्सिद्धिं लभते । गद्यापद्या शिवानी अस्माद्भवतीति वाग्भवमिति प्रथमं मूलमन्त्रबीजम् ॥१६॥

द्वितीयं बीजमुद्धरति कान्तान्तमिति । के मस्तके न्यस्यत इति कं बिन्दुः तस्यान्तो विसर्जनीयः अ इति तदन्तः ककारः । कुलं सकारः तत्पूर्व-पञ्चमं तत्प्रातिलोम्येन पञ्चमो लकारः । तदन्त ईकारः दन्तो बिन्दुः ककारल-कारेकारेण एतावता क्लीमिति कामराजाख्यबीजं गदितं उक्तम् । अयं मन्त्रो जपादेव जगत्क्षोभकृत् भवति । तृतीयं बीजमुद्धरति । दन्तान्ते दन्तानाम-न्त्यपंक्तौ न्यस्यत इति दन्तान्त औकारः तेन युतं कुलं सकारमुद्धरेत् । कीदृशं सदन्ति सानुस्वारं सकलं विसर्गसहितम् अस्य बीजत्रयजपादणिमा-दिसिद्धिर्भवति खेचरीसिद्धिश्च भवति । अणिमा लघिमा गरिमा प्राकाम्यं

अमुष्य मन्त्रस्य रदान्तयुक्तजम् बीजं सदन्तं नकुलीशपूर्वम् ।
शक्तिस्तु साखण्डलकर्णपूर्वम् सहार्द्धजैवातृकमाननान्तम् ॥ १९ ॥
वर्णः शुक्लो मुनिभिस्त्रिभुवनसहितस्य मन्त्रराजस्य ।
आगमपारगमतिभिर्गान्धारोऽस्य स्वरो गदितः ॥ २० ॥
विद्यामूलोत्पत्तिरेषा मयोक्ता ज्ञातव्येयं सर्वथा सिद्धिकामैः ।
देव्या सप्ता येन विद्येयमाद्या पूर्वं तेन प्राणहीनाऽभवत् सा ॥ २१ ॥

शिवशक्तिबीजमत एव शम्भुना
निहितं तयोरुपरि पूर्वबीजयोः ।
अकुलं कुलोपरि च मध्यमाधरे
दहनं ततः प्रभृति सोर्जिताऽभवत् ॥ २२ ॥

---

वशितेशिता । प्राप्तिः कामावसायित्वं शम्भोरैश्वर्यमष्टधा । एतद्बीजत्रयात्मकः त्रिपुरामन्त्रः ऋष्यादिः श्लोकः सुगमः ॥ १७-१८ ॥

अस्य मन्त्रस्य बीजशक्ती आह अमुष्येति । रद ओकारस्तस्यान्तः औकारः नकुलीशो हकारः तत्पूर्वं सकारः दन्तोबिन्दुः एतेन सौं इति बीजं विद्यादित्यध्याहार्यम् । शक्तिस्तु आखण्डलेन कर्णपूर्वेण ईकारेण अर्द्धजैवातृकेण अर्द्धचन्द्रेण च सहितम् आननान्तं ककारं जानीयात् । तथाचास्य मन्त्रस्य सौं बीजं क्लीं शक्तिः शुक्लो वर्णः गान्धारः स्वर इति ॥ १९-२० ॥

विद्येति । विद्याया मूलोत्पत्तिरेषा मयोक्ता इयमुत्पत्तिर्विद्यासिद्धिलिप्सुभिर्ज्ञातव्या । देव्येति इयं विद्या देव्या शप्ता तेन प्राणशून्याऽभवत् ॥ २१ ॥

शिवेति । यत इयं विद्या भवान्या सप्ता अतएव हेतोः तयोराद्यबीजयोरुपरि शिवशक्तिबीजं हस इति बीजं निहितम् । उक्तं हि सङ्कोचः परमा शक्तिः विकाशः परमः शिवः । सङ्कोचश्च विकास हसमित्यक्षरद्वयमिति । परस्यान्त बीजस्योपरि अकुलं हकारो निहितः । मध्यबीजस्याधरे अकुलं हकारो निहितः । मध्यबीजस्याधरेऽधः रेफो निहितः । तदवधि सा विद्या तेजोवती जाता ॥ २२ ॥

भैरवीयमुदिता कुलपूर्वा देशिकैर्यदि भवेत् कुलपूर्वा ।
सैव शीघ्रफलदा भुवि विद्येत्युच्यते पशुजनेष्वतिगोप्या ॥ २३ ॥
शिवाष्टमं केवलमादिबीजं भगस्य पूर्वाष्टमबीजमन्यत् ।
परं शिरोऽन्तं गदिता त्रिवर्णा सङ्केतविद्या गुरुवक्त्रागम्या ॥२४॥
कान्तान्तवान्ताकुलवामनेत्रान्वितं तथा दन्तिकुलं सनादम् ।
षट्कूटमेतत्त्रिपुरार्णवोक्तमत्यन्तगुह्यं स्मर एव साक्षात् ॥ २५ ॥
आद्यं बीजं मध्यमे मध्यमादावन्त्यं चान्ते योजयित्वा जपेद्यः ।
त्रैलोक्यान्तः पातिनो भूतसङ्घा वस्यास्तस्यैश्वर्यभाजो भवेयुः ॥२६

---

भैरवीयमिति । इयं बाला विद्या अकुलपूर्वा हकारपूर्वा सती भैरवी उक्ता सैव भैरवी यदि कुलपूर्वा सकारपूर्वा भवति तदा विद्येत्युच्यते । पशु-जनेषु अल्पज्ञेषु अप्रकाश्या यद्वा पशुजनेषु अदीक्षितेषु । तथा च एतन्मन्त्रस्य भेदत्रयं भवति वाग्भवाद्यम् । बाला अकुलपूर्वा सती भैरवी कुलपूर्वा सती विद्येति ॥ २३ ॥

बीजत्रयोपलक्षितं स्वतन्त्रञ्चाह शिवाष्टममिति । शिव उकारस्तस्याष्टम ऐकारः भग एकारः तत्पूर्वाष्टमं ईकारः परं तृतीयम् । शिरोबिन्दुः तदन्तो यस्य स औकारः स तृतीयबीजपलक्षकः इयं त्र्याक्षरी । सङ्केतविद्या कथिता गुरूपदेशैः परं बुध्यते ॥ २४ ॥

बीजान्तरमाह कान्तान्तेति । कं बिन्दुस्तस्यान्तोविसर्जनीयः तदन्तः कः वान्तः वकाराऽन्तो यस्य स लकारः अकुलो हकारः सकारोऽन्तो यस्य स रेफः वामनेत्रम् ईकारः दन्तीबिन्दुः कुलं सकारः सानुस्वारं सनादम् एत-त्त्रिपुरातन्त्रोक्तं षट्कूटं षड्भिर्वर्णैर्बीजम् अतिशयेन गोप्तव्यम् अयं मन्त्रः साक्षात् स्मर एव ॥ २५ ॥

अथ कामनाभेदेन जप्तव्यमन्त्रभेदानाह आद्यमिति । आदिमं बीजं मध्य-बीजस्थाने मध्यबीजञ्चादिबीजस्थाने अन्त्यं स्वस्थाने एवं योजयित्वा य एनं

आद्यं कृत्वा चावसानेऽन्त्यबीजम्
मध्ये मध्यं चादिमे साधकेन्द्रः ।
कुर्यान्नित्यं यो जपेन्मन्त्रमेनम्
जीवन्मुक्तः सोऽश्नते दिव्यसिद्धिम् ॥ २७ ॥
मन्त्रराजममुं समस्तजगद्विमोहनकारकम्
मातृकान्तरितं जपेदनुलोमतोऽपि विलोमतः ।
हंसदेवसमन्वितं सकलं बुधः पर एव वा
सोऽपि दिव्यगुणान्वितो लभते सुसिद्धिमनुत्तमाम् ॥ २८ ॥

---

मन्त्रं जपेत् । तस्य त्रैलोक्यवर्त्तिनः प्राणिनः वश्या भवन्ति ऐश्वर्यञ्च भवति इत्येकः प्रकारः ॥ २६ ॥

अपरमाह आद्यमिति । आद्यं बीजं अन्त्ये अन्तिमंच मध्ये मध्यमंचाद्ये कृत्वा प्रत्यहं य एनं मन्त्रं जपति स जीवन्नेव मुक्तो भवति दिव्यानांच या सिद्धिस्तां लभते ॥ २७ ॥

मन्त्रराजमिति य एनं मन्त्रश्रेष्ठम् अनुक्रमेण व्युत्क्रमेण च मातृकान्तरितं कृत्वा जपति स दिव्यगुणभाक् स तु अतुलां सिद्धिमाप्नोति । तत्र क्रमः मन्त्रमुच्चार्य अन्ते अकारसमुच्चरेत् पुनरपि मन्त्रमुच्चार्य आकारमुच्चरेत् एवं लकारपर्यन्तमक्षराणि । मन्त्रान्तरितं जपं कृत्वा पुनर्मन्त्ररहितं केवलं क्षकारमेव स्थानीयमुच्चार्य पुनः प्रतिलोमक्रमेण लकारादि अकारपर्यन्तं प्रत्येकं मन्त्रान्तरितं जपेत् । एवं मातृकाक्षरमालया जपं कुर्वतामेकवारेण जपः शतसंख्यापरिमितो भवतीत्यर्थः । शारदातिलके राघवभट्टेन एवं व्याख्यातम् । आकारादिहकारान्तां मातृकां पठित्वा मध्ये मन्त्रं पठेत् । ॐ नमः वर्णोऽयं ततः क्षकाराद्यकारान्तां मातृकां पठेत् । ततोऽतुलां सिद्धिं लभते । एतत्तु प्रकारान्तरम् । हंसदेवमित्यादि मूलमन्त्रबीजत्रयं यकारसकाराभ्यां संयोज्य जपेत् । पर एवेति । श्रीमूलविद्यायाः प्रथममध्यमे बीजे केवले उच्चार्य अन्तिमं बीजं हूंकारसकाराभ्यां संयोज्य जपेदित्यर्थः ॥ २८ ॥

व्यञ्जनहंससमन्वितमेतद्व्यञ्जनहंसजगतो निखिलस्य ।
यो जपति स्थिरनिर्मलचित्तः शीघ्रमुपैति नरः स तु सिद्धिम् ॥२९॥
कमलं परिलुप्तमध्यमान्त्यस्वरमीशादियुतं सबिन्दुनादम् ।
निगमादिनमोऽन्तरे विराजद्भुवि देवी हृदयं प्रविष्टमेतत् ॥ ३० ॥

विद्या कामदुघा त्रिलोकविनुता स्वर्गापवर्गप्रदा
गुह्याद्गुह्यतरा महोदरकरो या योगिनीनामिह ।
सा सारस्वतजन्मभूर्निगदिता सौभाग्यसम्पत्करी
सद्यः प्रत्ययकारिणी सकृदपि प्रोच्चारिता भूतले ॥ ३१ ॥

यतः स्वप्नावस्थामियमुपगता विश्वविनुता
ततः सिद्धिं नैव प्रवितरति जप्तापि सततम् ।
प्रवुद्धा चेद्विद्या फलति सहसा दीपनकरीम्
ततो विद्यां वक्ष्याम्यहमिह रहस्यामतितराम् ॥ ३२ ॥

---

व्यञ्जनहंसेति । हकारसकारयोरन्तर्गताकारानुस्वारान्तिमविसर्जनीयमपि स्नोपयित्वा केवलव्यञ्जनमात्रमेव विद्यया संयोज्य जपेत् सोऽप्यनुत्तमां सिद्धिं प्राप्नोति तदुक्तं प्रत्यक्षरगणं हंसेन ग्रथयित्वा जपेत् सुधीरिति ॥ २९ ॥

कमलमिति । कमलस्वरूपमेवोद्धरेत् कीदृशं परिलुप्तो मध्यमोऽन्त्यस्वरश्च यत्र तादृशं मकारान्त्यस्वरशून्यं कलं एवंरूपः । ईशः शिव उकारस्तस्यादिरीकारः सबिन्दुनादं तद्युक्तं तेन ककारलकारेकारबिन्दुनादैः क्लीमिति कामाख्यबीजम् । निगमादिः प्रणवः । नम इति स्वरूपग्रहणं प्रणवनमसोर्मध्ये कामबीजे निहिते चतुरक्षरात्मिका देवी हृदयाख्या विद्या स्यात् । प्रासङ्गिकमुक्त्वा भैरवीं स्तौति ॥ ३० ॥

विद्येति । सा विद्या इह भूतले च या विद्या योगिनीनां महोदयकरी तत्वज्ञानजनिका कामदुघा ईप्सितार्थं प्रदायिनी अतिगोप्या । वारैकमपि जप्त्वा सती प्रत्ययदायिनीति ॥ ३१ ॥

पुष्पं वारिमुचां दवादिरपरस्तावेव वर्णौ ततो
दीर्घं वारिसखान्तमप्स्वपि तथा धान्तौ सलोकस्वरौ ।
विद्या वाग्भवबीजदीपनकरी सारस्वतोत्पत्तये
साक्षात्कांक्षितपारिजातलतिका वस्वक्षरोक्ता मया ॥३३॥
ब्रह्मा शक्रदृगन्वितः सहभगा मेषान्विता नादिनी
कान्तान्तं सभगं सपूषणमतोधान्तं त्विमेषः सदृक् ।
कालोऽनन्तयुतं वियत् सदशनः संवर्त्तको भीषणा
साङ्कूरा कमलासनः सहशिखो वैश्वानरस्तादृशः ॥ ३४ ॥

---

यत इति । यतो हेतोः सुप्तावस्थां गता इयं विद्या अतो वारंवारमपि जप्त्वा सिद्धि न ददाति प्रबुद्धा यदि भवति तदा हठात् फलं ददादि अतो हेतोर्दीपनीं विद्यामस्या अहं कथयामि रहस्यां गोप्याम् । गोपनीये रहः स्मृतम् ॥ ३२ ॥

तत्राद्यबीजदीपनमाह पुष्पमिति । मेघानां पुष्पं जलं तद्बीजं वकारः तमुच्चरेत् । अपरो रवर्णः दवादिर्दवशब्दस्यादिभूतोदकारः पुनस्तावेव वर्णौ रकारदकारौ तदनन्तरं दीर्घम् आकारसहितं वारि जलबीजं सखा तस्यान्तेन गकारेण वर्त्तत इति खान्तः शकारस्तमुद्धरेत् । अप्सु वकारः तथा दीर्घस्तेन वाग्वा इति भवति लोकस्वरयुतो धान्तौ धोऽन्ते यस्य स दकारः धस्यान्तो लकारः दकारलकारौ लोकशब्देन त्रिसंख्योपलक्षितः तत्संख्यक इकारः तेन युतौ एतावता वद वद वाग्वादिनि इति भवति । इयमष्टाक्षरी विद्या वाग्भवोपलक्षितबीजसन्दीपनजनिका सारस्वतधर्मोत्पत्तये आकांक्षितार्थे कल्पलतेव ॥ ३३ ॥

द्वितीयबीजदीपनमन्त्रमाह ब्रह्मेति । ब्रह्मा ककारः शक्रेण दृशा च युक्तः शक्रः इन्द्रः तद्बीजं लकारः दृशि चक्षुषि न्यस्यत इति दृक् इकारः प्रथमोपान्तत्वात् ह्रस्वपरिग्रहः । नादिनी लकारः भगेन एकारेण मेषेण लकारेण चान्विता उद्धर्त्तव्या कस्यान्तः खःसोऽन्ते यस्य सकः सभगम् एकारसहितं

एकादशाक्षरीयं मन्मथबीजप्रबोधनकरी स्यात् ।
क्षोभयति नाकभूतलपातालनिवासिनः सहसा ॥ ३५ ॥
सावित्री वदनयुता महादिकालीव्योमान्तं शशधरखंडमण्डितान्तम् ।
मोहिन्या सरसिजभूर्युतस्थाग्निर्विद्येयं परबीजदीपनी सा ॥ ३६ ॥
या यस्य दीपनकरी गदितेह विद्या
बीजस्य तस्य पुर एव समुच्चरेत्ताम् ।
विद्याषडङ्गवदनेषु यथावदेव
न्यासेषु साधकवरो विदधीत शास्त्र ॥ ३७ ॥
विद्याङ्गमेवं न्यसतः स्वदेहे त्रैलोक्यमेतद्वशमेति पुंसः ।
पापानि सद्यः प्रशमं प्रयान्ति न स्युर्न रक्षांसि सपन्नगानि ॥३८॥

---

सपूषणं सलकारम् अनन्तरं धान्तं दकारम् उद्धरेत् । ह्रस्वरूपो मेषो लकारः सदृक् इकारसहितः । कालो मकारं समुद्धरेत् । अन तेन अकारेण युतं वियत् हकारमुद्धरेत् । सदशनः ओकारसहितः संवर्तकः क्षकार उद्धर्तव्यः । भीषणा भकारः साक्रूरा सानुस्वारा कमलासनः ककारः उकारसंयुतः वैश्वानरो रेफः तादृश उकारसहित उद्धर्तव्यः । एतावता क्लिन्ने क्लेदिनि महाक्षोभं कुरु इति भवति ॥ ३४ ॥

इयम् एकादशवर्णात्मिका विद्या मन्मथबीजस्य मध्यबीजस्य दीपिका भवेत् ॥ ३५ ॥

तृतीयबीजदीपनमाह सावित्रीति । सावित्रीपदेन ओङ्कारो लक्षितः महादिकालो महाकालीत्यर्थः । तदाद्यवर्णो मकारो लक्षितः वदन आकारस्तेन युतः व्योम हकारः तदन्तं सानुस्वारम् उद्धरेत् मोहिन्या उकारेण सरसिजभूर्ब्रह्मा ककार उद्धर्तव्यः । ततो मोहिनी अतोऽपि रेफः एतावता ॐ महामोक्षं कुरु इति सप्ताक्षरी चरमबीजदीपनी उक्ता ॥ ३६ ॥

केन प्रकारेण दीपनयोग इत्याह या यस्येति । या विद्या यस्य बीजस्य दीपनकरी उक्ता तद्बीजस्य पुरतः प्रथमं तां विद्यामुच्चरेत् ॥ ३७ ॥

मन्त्ररूपमिदमीरितं मया सर्वथा गुरुमुखेन लभ्यते।
गुर्वनुग्रहकृते महीतले मन्त्र एष न हि सिद्धिदायकः ॥ ३९ ॥

इति श्रीनागभट्टविरचिते त्रिपुरासारसमुच्चये
द्वितीयः पटलः ॥

# तृतीयः पटलः

अथेदं शरीरं स्वकीयाङ्गुलीभिर्बुधैः षण्णवत्यङ्गुलायाममुक्तम्।
द्विनेत्राङ्गुलीभिः शरीरात् समीरोऽधिकः प्राणसंज्ञो मतो योगविद्भिः १
इह प्राणवायुं सदाभ्यासतो यो नरो न्यूनभावं नयत्येनमङ्गात्।
समत्वं शरीरेण वा भूतलेऽस्मिन् स पूज्यो बुधैरुत्तमो योगवित्सु २

---

न्यासेषु दीपनीयोगमाह विद्येति। विद्यान्यासषडङ्गन्यासवदनन्यासेषु योजनीयेति। एवं कृते विद्या प्रबुद्धा भवति। एवं प्रकारेण मूलविद्या मन्त्रस्याङ्गं स्वशरीरे न्यसतः पुंसः लोकत्रयं वशमेति पापानि शाम्यन्ति सद्यः सह ॥ ३८ ॥

इदं मायामन्त्रस्वरूपं कथितं गुरुणा वा यदि लभ्यते तदा परं सिध्यति अन्यथा गुरुप्रसादमन्तरेण एष मन्त्रो न सिध्यतीति ॥ ३९ ॥

इति त्रिपुरासारसमुच्चयटीकायां द्वितीयः पटलः।

एवं साधकानां सकलपुरुषार्थसारभूतं मन्त्रस्वरूपमुक्त्वा पुरुषार्थान्तराय परिहाराय योगाङ्गभूतप्राणायामप्रकारान् तद्विपांश्च वक्तुमुपक्रमते अथेदं शरीरमित्यादिना। इदं शरीरं पण्डितैः षडधिकनवत्यंगुलदैर्घ्यम् उक्तं यस्य शरीरस्य परिमाणं तस्यैवांगुलिमानेन। प्राणसंज्ञकोवायुः शरीराग्निगर्भ-स्थानाद्द्वादशांगुलीभिरधिको मतः द्वादशांगुलपर्यन्तं सञ्चरति ॥१॥

इहेति। इह भुवि यो नरः सदाभ्यासतः सदाभ्यासेन एनं प्राणवायुं शरीरान्न्यूनभावं सकलाङ्गव्यापकत्वं नयति। शरीरेण समाङ्गत्वं तौल्यं वा

चतुर्दशात्रापघने प्रधाना नाड्यः स्मृतास्तास्वपि तिस्र एव ।
इडा सुषुम्नापि च पिङ्गलाख्या मुख्या सुषुम्नैव च तासु नाडी ॥३॥
इडा नाम नाडी स्थिता वामभागे तनोर्दक्षिणे पिङ्गला नाम नाडी ।
तयोः पृष्ठवंशं समाश्रित्य मध्ये सुषुम्ना स्थिता ब्रह्मरन्ध्रन्तु याश्च ४
सुषुम्नान्तराले स्थिता चित्रनाडी युता पञ्चवर्णोज्ज्वला पञ्चदेवैः ।
तदन्तर्गतं ब्रह्मरन्ध्रं सुसूक्ष्मम मृणालान्तरालोल्लसत्तन्तुतुल्यम् ॥५

---

आसनाङ्गव्यापकत्वं वा करोति स योगवतां मध्येऽस्मिन् भूतले पूज्यते इति ॥ २ ॥

प्राणाश्रयभूता नाडीर्दर्शयति चतुर्दशेति । तदुक्तं नाडीनामाश्रयः पिण्डो नाड्यः प्राणस्य आश्रय इति । अस्मिन् शरीरे चतुर्दश नाड्यः प्रधानीभूताः सन्ति अपि चतुर्दशसु मध्ये चतस्रः प्रधानाः स्मृताः ॥ ३ ॥

तासां तिसृणां कथयति । इडेति इडा पिङ्गला सुषुम्ना चेति तास्वपि तिसृषु मध्ये सुषुम्नैव प्रधानीभूता । चतुर्दशनाडीनां नामानि यथा । इडाच पिङ्गला चैव सुषुम्ना च सरस्वती । गान्धारी हस्तिजिह्वा च सुपूषा च यशस्विनी ॥ अलम्बुषा कुहूश्चैव शङ्खिनी चित्रिणी तथा । विश्वोदरी विश्वमुखी व्याप्ता ह्येता चतुर्दश ॥ एतास्वपि तिस्रो मुख्याः यास्वपि योगः प्रतिष्ठितः तास्वपि सुषुम्नैव मुख्या सा च द्वादशान्तं पृष्ठवंशं समाश्रित्य सकलाधारत्वेनाधोमुखी ऋजुभूतातिष्ठति । आधारो नाम पद्मस्थानात् द्वागुलादूर्ध्वं मेढ्राद्‌द्व्यंगुलादधोभागे चतुरंगुलायामविस्तारं अंगुलोन्नतं त्वगादिधातुभिर्वेष्टितं चतुर्दलात्मकं पण्डराकारं पद्मं तत्कर्णिकामध्ये त्रिकोणायोनिः तन्मध्ये सकलप्रपञ्चनिमित्तोपादानभूता कुण्डल्याख्या चिन्मयी शक्तिः त्रिगुणितादिरूपेण सूर्येन्दु वैश्वानराणां मूलभूता भ्रमति या त्रिकोणमुत्थिता सुषुम्ना नाम नाड़ी वीणादण्डाख्यपृष्ठवंशस्य पुरोभागमवलम्ब्य ब्रह्मरन्ध्रपर्यन्तम् ऊर्ध्वाकारा तिष्ठति । तथाच्च तन्त्रचूडामणिः । मेरुदण्डे वहिः पार्श्वे चन्द्रसूर्यौतिमस्तके । किम्वा मध्ये-- सुषुम्ना सन्निविष्टा च तन्मध्ये चित्ररूपिणी । तत्रैव ग्रथितं पद्मं मूलादिपद्म-

ब्रह्मसूत्रमिदमेव देहिनां जीवभूतममृतैककारणम् ।
यद्वदन्ति मुनयः पुरातना दिव्यमार्ग इति भव्यचेतसः ॥ ६ ॥

पञ्चकम् । कलिकाकाररूपेण डाकिन्याद्यावलम्बितम् । मूलद्वारं समाच्छाद्य स्थिता नागस्वरूपिणी । वायुना भिद्यते मुक्तं दृढं चित्रा नयेत्ततः । तच्छ्वासोज्ज्वलकामस्य शिखयाऽतिसमुज्ज्वला । प्रतिचक्रप्रबुद्धा सा जीवात्मानं परे कुले । नियोजयति तद्योगादमृतं क्षरते चिरम् । व्योम प्रोद्भिद्य नासाग्रे गतौ चन्द्रदिवाकरौ । अधोचक्रं महापद्मं क्रोडीकृत्य सुषुम्नया । व्यावृत्य नासिकामध्यं गतं चित्रा तु तद्गता । ऊर्ध्वं भित्त्वा तु लिङ्गं वै इतरान् पुष्करान् ततः । वह्नीरुद्धमनाकांक्षाकांक्षिणी मोक्षदायिनी । जीवनांहृत्सम्बद्धा स्थिरा परमसन्निधौ एतद्भेदं विजानाति भित्त्वा याति परं पदम् । इत्यादि बहुशः । योगार्णवेऽपि । सुरशृङ्गाटपार्श्वेन तेजैव सव्यतः क्रमात् सूर्याचन्द्रमसौ नाड्यौ गते नासाद्वयावधि । तन्मध्ये द्वितीयं भित्त्वा सुषुम्ना पद्मकोटरे । ब्रह्मरन्ध्रावधिर्याता भित्त्वा व्योम सुरालयम् । मुखेनाच्छाद्य तद्द्वारं कुण्डलीशक्तिरुज्ज्वला । निद्रावशगता देवी प्रसुप्तभुजगोपमा । तत्त्रिकोणस्थ वामदक्षिणकोणयोः सम्भूते सुषुम्नाया वामदक्षिणभागे इडापिङ्गले स्थिते । तयोर्मध्ये इडा नाम नाडी चापाकृतिर्भूत्वा लिङ्गमूलस्थाने सुषुम्नामाश्लिष्य दक्षिणभागं गता तदाकारां पुनरपि नाभिस्थाने वाममार्गं गता । तदा पुनरपि हृदयस्थानमाश्लिष्य दक्षिणभागं गता । तदा करी पुनरपि जानुमूलमाश्लिष्य वामनासापुटं गच्छति । एवं दक्षिणभागसम्भूता पिङ्गला सुषुम्नामाश्लिष्य दक्षिणनासाविवरं गच्छति । सुषुम्नामूलपुरोभागादुत्थिता आजिह्वान्तं सरस्वती नाम नाडी स्थिता । केचित्तु त्रयं वर्णतति । एताः सुषुम्नास्तिस्रश्च यासु योगः प्रतिष्ठितः । ताश्च नासापुटद्वन्द्वब्रह्मरन्ध्रविनिर्गताः । सरस्वत्यादिचत्वारो मुखरन्ध्रविनिर्गताः । तास्वेका शब्दजननी अन्या स्वरसवाहिनी । अपरा रसनाधारा परा तोयवहा शिवा । अन्याः पट्नेत्रकर्माङ्गमेदोद्धारविनिर्गताः । शङ्खिनी नाभिसम्बन्धा या मांतुर्हृदि रुध्यते । यथा

इडायां चरत्येषं शीतांशुमाली
अतो वामभागेऽमृतं सम्प्रदिष्टम् ।
रविः पिङ्गलायां चरत्येव तस्माद्
विषं दक्षिणो भाग उक्तो मुनीन्द्रैः ॥ ७ ॥

जानीयादुदयं बुधः स्वजठरे कन्देऽशरीरे नृणाम्
घ्राणास्तिग्मकराङ्कुले खलु लयं सन्ध्ये च पूर्वापरे ।
उत्पत्तिश्च लयश्च सन्ततमयोर्भूत्ति निशां वासरम्
चोर्ध्वां वृत्तिमधस्तया हिमकर योर्ध्वा दिनेशं गतिम् ॥८॥

---

गर्भगतः पिण्डः पुष्यतेऽन्नरसादिभिः । एताभ्य एवं नाडीभ्यः शाखोपशाख-प्रकारेण सार्द्धलक्षत्रयसंख्यानां नाडीनां सम्भवः । कुत्र का नाडो तिष्ठति इति शिष्याकांक्षायमाह इडेति शरीरस्य वामांशमाश्रित्य इडा नाम नाडो दक्षिणभागं पिङ्गला तयोर्नाड्योर्मध्ये देहस्य पृष्ठवंशमाश्रित्य ब्रह्मरन्ध्रपर्यन्तं सुषुम्ना अवस्थितेति । सुषुम्नाया अभ्यन्तरे चित्रा नाडी स्थिता पञ्चभिर्वर्णैः श्वेतरक्तादिभिरुज्ज्वला पञ्चभिर्देवैर्ब्रह्माविष्णुरुद्रेश्वरसदाशिवैः संयुक्ता । तदुक्तम् । ब्रह्मा जनार्दनो रुद्र ईश्वरश्च सदाशिवः चित्राख्यनाड्यन्तःस्थाश्च पञ्चभूताधिदेवताः ॥ ४-५ ॥

ब्रह्मेति । इदमेव ब्रह्मसूत्रं शरीरिणां प्राणभृतां जीवभूतम् अमृतं-कारणम् अस्मिन्नेव ज्ञायते मरणं न चरतीत्यर्थः । यद्ब्रह्मसूत्रं प्राचीनां मुनयो दिव्यमार्गं इति कथयन्ति निर्वाणोपयोगी स एव मार्ग इत्यर्थः ॥ ६ ॥

इडायामिति । एष शिशिरकिरणो वामे इडासंज्ञायां नाड्यां चरति तेन वामभागेऽमृतमुक्तं पिङ्गला वामादिभ्यश्चरति सा च दक्षिणभागमाश्रितेति स भागो विषसंज्ञकः आदित्यस्य खेचरत्वात् वायुनियमेन सिध्यतीति ॥ ७ ॥

तस्योत्पत्तिविनाशज्ञानमाह जानीयादिति । बुधः अशरीरे वायोर्नृणां कन्दे मूलभूते आधारे चक्रे उदयम् उद्भवं जानीयात् । तथा आधारचक्रे

तुषारांशुनाडी प्रपन्ने तु देवे तदा शान्तिकादीनि कर्माणि कुर्यात् ।
बुधो रौद्रकर्माणि मार्त्तण्डनाडीमुखे मिश्रकर्माणि नाड्यो प्रपन्ने ॥ ९ ॥
भूतानमुदयं द्वयोरपि बुधः संलक्षयेत् पक्षयो-
स्तत्राधो वसुधोदयं निशितधीर्घ्राणस्य दण्डस्पृशि ।
देवेऽधःस्पृशि वारिणो हुतवहस्योर्ध्वं गते सूर्दयम्
तिर्यक्संस्पृशि मारुतस्य परितः स्पृष्टे मरुद्रत्मनः ॥ १० ॥
वश्यस्तम्भनयोः प्रशस्त उदयो भूमेर्जलस्योदयः
शस्तः शान्तिकपौष्टिकादिषु शुभेष्वह्नाय वह्नेः पुनः ।
शत्रोर्मारणदारणादिकरणेपूच्चाटनोल्लासयोर्वायोः
शान्तिकनिर्विषीकरणयोर्व्योम्नो हितश्चोदयः ॥ ११ ॥

---

गुदोपरिलिङ्गाधःस्थिते वायुरुत्तिष्ठति घ्राणाद्बहिर्द्वादशांगुले विनश्यतीत्यर्थः । तदेव स्थानद्वयं पूर्वापरे सन्ध्ये कन्दात् पूर्वसंख्या घ्राणे द्वादशांगुलं बहिर्याति । पश्चादेतीति स्थानद्वयम् उत्पत्ति लयं विनाशं च ते एव ज्ञातव्ये । आधारेति । वायोरधोगमनं निशां जानीयात् ऊर्ध्वगमनं वासरं दिवसं जानीयात् । उक्तं हि अहरेव प्राणो रात्रिरपान इति तथाधोवृत्ति चन्द्रं जानीयात् ऊर्ध्वं गमनमिति । अतएव योगार्णवे वर्पेत्यधोमुखश्चन्द्रः शोपेत्यूर्ध्वमुखोरविरिति ॥ ८ ॥

केन वायौ कानि कर्माणि कर्त्तव्यानीत्याह तुषारांशुनाडीमिति तुषारांशुनाडीं इडां गते वायौ शान्तिजनकानि कर्माणि कुर्यात् । सूर्यनाडीं पिङ्गलां गते रात्रौ रौद्राणि दारुणानि कर्माणि कुर्यात् । चन्द्रमसः शीतलांशुत्वात् सूर्यस्य खरकरत्वादिति भावः । उभयनाडीस्थे वायौ शशिकानि रौद्राणि च कर्माणि कुर्यात् ॥ ९ ॥

भूतानामिति । द्वयोरपि पक्षयोः शुक्लकृष्णयोर्भूतानां पृथिव्यस्तेजोवाय्वाकाशानाम् उद्भूयं सलक्षयेत् अवधारयेत् । तत्र भूतेषु मध्ये पृथिव्या उदयं घ्राणमध्यदण्डते वायौ यदा प्रवास्यते दण्डाकारगतिर्भवति तदा

धरणेरुदयो गदार्दितानाम्
यदि दूतः समुपेत्य पृच्छतीह ।
सहसा नहि रोगजा प्रबाधा
प्रशमं याति चिकित्सितापि सम्यक् ॥ १२ ॥

जलोदये व्याधिरुपैति शान्ति मृत्युर्भवत्येव वसूदये च ।
तथोदये चापि समीरणस्य व्योम्नाऽचिरेणैव रुजां विनाशः ॥१३॥

देवे दक्षिणभागगेऽथ पुरुषो रोगातुरो दक्षिणे
स्थित्वा पृच्छति पृच्छकः स पुरुषो जीवत्यरोगश्चिरम् ।
वामायां तु रुजाकुलीकृततनौ वामाश्रिते चेश्वरे
वामा पृच्छति चेत् स्थिता गतगदा वामाचिरं जीवति ॥ १४ ॥

---

भूमेरुदयं जानीयात् । देवे वायौ अधःस्पृशि सति वारिणो जलस्य उदयं जानीयात् ऊर्ध्वं गते वायौ हुतवहस्याग्नेरुदयं जानीयात् । तिर्यक् पार्श्वद्वयं संस्पृशि वायोरुदयं जानीयात् । समस्तनासारन्ध्रे व्यापके वायौ वहति सति मरुद्वर्त्मन आकाशस्य उदयं जानीयात् ॥ १० ॥

एतज्ज्ञानफलमाह वश्येति । भूमेरुदये वश्यजनकं स्तम्भजनकञ्च कर्म कुर्यात् । जलभूतस्योदये सति शान्तिजनकं तुष्टिजनकञ्च कर्म कुर्यात् । झटिति स तु मारणादिजनके कर्मणि वह्नेरुदयः प्रशस्तः । शत्रोर्देशोन्मूलने नगरोच्छेदे च वायोरुदयः प्रशस्तः । निर्विषीकरणसान्त्वने च आकाशस्योदयः प्रशस्तः ॥ ११ ॥

प्रश्नमाह धरणेरिति । पृथिव्या उदये सति नैरुज्यममुकस्य भविष्यति दूत आगत्य पृच्छति तदा रोगजा पीडा सद्यः कृतप्रतिक्रियापि हठेन शान्ति नयतीति वक्तव्यमित्यर्थः । जलस्योदये सति यदि पृच्छति तदा व्याधिः शान्ति याति । वसूदयेऽग्नेरुदये यदि पृच्छति तदा रोगार्त्तस्य मृत्युर्भवति । वसुहुताशनमिति विश्वः । वायोरुदये यदि पृच्छति तदा मृत्यु-

देवे गते पृच्छति वामभागं स्थित्वा नरो दक्षिणतो यदीह ।
व्यत्यासतोऽस्मादपि कृच्छ्रसाध्यं वदन्ति सन्तः खलु रोगजातम् १५
अन्तर्गते पृच्छति पृच्छकश्चेद्देवे नरो जीवति वीतरोगः ।
तेनैव रोगेण वहिर्गतेऽस्मिन् परेतराजस्य पुरं प्रयाति ॥१६॥
सर्वेषु कार्येषु यदीश्वरेऽस्मिन् अन्तर्गते वाञ्छितसिद्धयः स्युः ।
वहिर्गतेऽमङ्गलमीश्वरेऽपि शुभाशुभं कर्मफलं तु विद्यात् ॥१७॥
आरभ्य दर्शंप्रथमासुदेति वामे पुटे त्रीणि दिनानि देवः ।
वामेतरे त्रीणि ततो दिनानि पूर्णा तिथिर्यावदथैवमेव ॥१८॥
अथारभ्य शुक्लान्यपक्षादिभूताम् तिथिं त्रीणि देवो दिनान्यभ्युदेति ।
पुटे दक्षिणे त्रीणि वामे तु यावत् कुह्वरेवमेवं समालक्षयेन्ना ॥१९॥

---

रित्यर्थः । आकाशोदये यदि आगत्य पृच्छति तदा त्वरयैव रोगाणां विनाशो भवति ॥ १२-१४ ॥

प्रकारान्तरमाह । देवे वायौ दक्षिणां सङ्गते सति तत्रैव स्थित्वा दूतो यदि पृच्छति तदा रोगार्त्तो जनो नीरोगः सन् बहुशतत्रयं जीवति । स्त्रियां रोगगतायां वामभागगतो वायुर्भवति तत्राश्रितो दूतः पृच्छति तदानीं रोगात् सा चिरं जीवति इति ॥ १५ ॥

देव इति । वामप्रदेशं गते वायौ दक्षिणांशं गत्वा दूतो यदि पृच्छति तदा कष्टसाध्यं नैरुज्यं वक्तव्यम् । दक्षिणगे वायौ वामभागगः पृच्छति तदा कष्टसाध्यं नैरुज्यं वदेत् । अन्तर्गत इति । अभ्यन्तरं गते वायौ यदि पृच्छकः पृच्छति तदा नीरोगी जीवति । घ्राणाद्बहिर्द्वादशांगुलाद्बहिर्गते वायौ यदि पृच्छति तदा तेनैव रोगेण यमालयं रोगी यातीति । कार्यान्तरे तत् प्रयोजनं कथयति । यदीश्वरे वायौ अन्तर्गते अत कार्ये आकांक्षितसिद्धिर्भवति वहिर्गते द्वादशांगुलादधिकं गते सर्वकार्याणि नश्यन्तीति । कति दिनानि कुत्र तिष्ठतीति कथयति ॥ १६-१७ ॥

एकस्य पक्षस्य विपर्ययेण रोगाभिभूतिर्भवतीह पुंसाम् ।
तयोर्द्वयोर्बन्धुसुहृद्विपत्तिः पक्षत्रये व्यत्ययतो मृतिः स्यात् ॥२०॥

यदात्मनः कालवशात् समीरणो
विपर्युदेति प्रकृतिं विहाय सः ।
तदा निरुध्य श्वसनं निपीडयेद्
यथा स्थितं पक्षमुपैति चात्मनः ॥ २१ ॥

द्वावेव धत्तः सकलञ्च कालं दिवाकरः कैरववान्धवश्च ।
भोक्त्री सुषुम्ना सकलस्य चास्य कालस्य दोषादिवसात्मकस्य २२

---

आरभ्येति । दर्श एव प्रथमा तिथिर्यस्याः प्रतिपदः सा दर्शप्रथमा प्रतिपत् तेन शुक्लप्रतिपदादितिथित्रये वामे चतुर्थ्यादि दक्षिणे सप्तम्यादि वामे दशम्यादि दक्षिणे त्रयोदश्यादि वामे कृष्णप्रतिपदादि दक्षिणे चतुर्थ्यादि वामे सप्तम्यादि दक्षिणे दशम्यादि वामे त्रयोदश्यादि दक्षिणे । अथेत्यनन्तरं शुक्लान्यपक्षादिभूतां कृष्णप्रतिपत्तिथिमुपक्रम्य त्रीणि दिनानि दक्षिणभागे वायुरुदेतीत्यादिसंख्या उक्ता एवं ना पुरुष उदरं लक्षयेत् ॥ १८-१९ ॥

एकस्येति यद्यकत्र पक्षे वायोर्वैपरीत्यं भवति तदा तस्य पुरुषस्य रोगजनितोऽभिभवो भवति । शुक्लप्रतिपदादिनित्रयं यावद्वायुर्वामपुटे सञ्चरति तत्र यदि दक्षिणपुटे भवति एवं पंचदशदिनपर्यन्त यदि व्यत्ययो भवति तदा रोगाभिभूतिर्भवति मासमात्रं वैपरीत्येन सुहृदां विपत्तिः पंचचत्वारिंशद्दिनानि यावद्व्यत्ययो तस्य पुरुषस्य मरणं भवतीति वायोर्वैपरीत्ये रोगादिकं भवतीति स्वाभाविकी गतिः ॥ २० ॥

विपरीतोदये शुभोदयः कथं स्यादित्याह यदेति । स्वकीयादृष्टवशाद्वायुर्वैपरीत्ये उदेति तदादिबोधं कृत्वा श्वासं पीडयेत् यथा पुटान्तरं गच्छति ॥ २१ ॥

द्वावेवेति । कुमुदबन्धुश्चन्द्रः सूर्यश्चासौ सकलं कालं धत्तः दिवारात्रिरसात्मकस्य रात्रिविन्दवोपलक्षितस्य कालस्य भोक्त्री भक्षिका सुषुम्ना परं

ततः क्रमेणैव विशुद्धनाडीपथान्तरः प्राणसमीरणस्य ।
शनैः शनैः संयमने प्रयत्नं यथाविधानं विदधीत धीरः ॥२३॥
शीतांशुमार्गेण शनैः समीरमापूरयेत् स्वोदरमादरेण ।
विकारमात्राभिरपेततन्द्रः कालाग्निमूलार्पितचित्तवृत्तिः ॥२४॥
ततो धारयेन्मारुतं शुद्धचेताश्चतुः षष्टिमात्राः समापूरितं तम् ।
बहिर्भास्वता रेचयेन्मन्दमेनं तदर्द्धाभिरन्तर्निरुद्धं तु ताभिः ॥ २५ ॥
विपरीतमतो विदधीत सुधीः पुनरप्यथ तद्विपरीतमिति ।
अमुना विधिना सुमनाः सततं मरुतो विदधीत सुसंयमनम् ॥२६॥
प्रस्वेदं जनयति यः प्राणायामेषु सोऽधमः प्रोक्तः
कम्पोमध्यः पुंसां भूमित्यागं तनोस्तनोति परः ॥ २७ ॥

---

मान्या नाडीभोक्तृत्वं नाम चित्कलासमवेतस्य तस्योपाधितया रूपत्वमापाद्य सर्वस्वाभिभावकत्वमित्यर्थः ॥ २२ ॥

तत इति । सुषुम्नैव शोधनी तदा क्रमेण विशोधितनाडीमार्गान्तरः सन् प्राणवायोः शनैः शनैः संयमने नियमे प्रयत्नं यथा कथितप्रकारेण कुर्वीत ॥ २३ ॥

तमेव प्रकारं कथयति शीतांशुमार्ग इति । शीतांशोश्चन्द्रस्य वर्त्मना वामनाड्या वायुभिः स्वकीयमुदरं विकारमात्रया षोडशमात्रया पूरयेत् । अपेता तन्द्रा निद्रा यस्य सः कालाग्निमूलाग्निमूलार्पितचित्तवृत्तिः । कालाग्निमूले मूलाधारेऽर्पिता चित्तवृत्तिर्व्यापारो येन ॥ २४ ॥

तत इति । पूरितं वायुं चतुष्षष्टिमात्रापर्यन्तं धारयेत् तस्य गतागतं विरोधयेत् भास्वता सूर्यमार्गेण दक्षिणया शनैस्तदर्द्धाभिर्द्वात्रिंशन्मात्राभिरभ्यन्तरे निरुद्धं तं वायुं रेचयेत् त्यजेत् ॥ २५ ॥

विपरीतमिति । अतः प्रकृताद्विपरीतं विदधीत कुर्यात् । पुनरपि तद्विपरीतं प्रकृतक्रमेणादिकं पुनरपि तद्विपरीतम् एवमभ्यसेत् अमुना प्रकारेण मरुतो वायोर्नियमं न कुर्यात ॥ २६ ॥

तावद्विदधीत बुधः प्राणायामं समाहितो विधिवत् ।
यावत् सम्भवति भुवि प्राणायामस्योत्तमस्य गुणः ॥ २८ ॥

अयं प्राणायामः सकलदुरितध्वंसनकरो
विगर्भः प्रोक्तोऽसौ शतगुणफलो गर्भकलितः ।
जपध्यानापेतः स तु निगदितो गर्वरहितः
स गर्भस्तून्मुक्तो मुनिपरिवृतैर्योगनिरतैः ॥ २९ ॥

शुचिः प्राणायामान् प्रणवसहितान् षोडश वशी
प्रभाते सायञ्च प्रतिदिवसमेवं वितनुते ।
द्विजो यस्तं भ्रूणप्रहरणकृतांह्रोऽभिकलितम्
पुनन्त्येते माजादिह दुरिततूलौघदहनाः ॥ ३० ॥

त्रायन्त्यमी षड्भिरपीह मासैर्जन्मान्तरोपार्जितपापपुञ्जान् ।
संवत्सराद्ब्रह्मपदं तदेकं प्रकाशयन्त्येव यदच्युताख्यम् ॥३१॥

इह रेचकपूरकौ विहाय स्थिरधीः कुम्भकमेव केवलं यः ।
सततं कुरुते मनोजवत्वं लभते वीतजरामयः स मर्त्यः ॥३२॥

न हि तस्य सुदुर्लभं त्रिलोक्यामिह यः केवलं कुम्भके निषण्णः ।
अणिमादिगुणाष्टकं करस्थम् ननु तस्यैव निरस्तमृत्यु भीतेः ॥३३॥

राजदन्तयुगलादिमस्पृशन् सन्निधाप्य रसनां तदन्तिके ।
काकचंचुपुटमारुतं पिबेत् प्राणसंयमनमेतदुत्तमम् ॥ ३४ ॥

---

प्रस्वेदमिति । अयं सुगमः ॥ २७-२८ ॥

अयमिति । गर्भो गर्भशून्यः प्राणायाम उक्तः सन् सकलदुरितानि विनाशयति गर्भेण सहितोऽयं शतगुणफलसहितः कथितः विगर्भापेक्षया को विगर्भः कः सगर्भः इत्याकांक्षायामाह जपेति । जपैर्ध्यानैश्च शून्यो यः गर्भरहितः ताभ्यां युक्तो यः सगर्भः कथितः ॥ २९ ॥

शुचिरित्यादि । चतुष्टयं सुगमम् ॥ ३०-३३ ॥

द्विकचंचुसमीरकं शनर्धयतः सम्परिकृत्य सन्ध्ययोः ।
श्रमदाहगरोदरामयज्वरगुल्माः प्रशमं प्रयान्ति च ॥ ३५ ॥
उभयोरपि सन्ध्ययोर्मुहूर्त्ते पिकधातुर्धयतस्त्रिमासमात्रम् ।
सरसं द्विकचंचुगन्धवाहं भुवि सारस्वतसिद्धिरुत्तमा स्यात् ॥३६॥
विषमुग्रमुदग्रवीर्यभाजां प्रविनाशं समुपैति पन्नगानाम् ।
किमु वृश्चिककीटलूतकानामिह काकोलमुखानिलस्य पानात् ॥३७॥
द्विकचंचुसमीररगं नरः सरसं यः परिकृष्य सन्ध्ययोः
कुरुते निजकुण्डलीमुखे क्षयरोगं स विमुच्य जीवति ॥ ३८ ॥
द्विकचंचुसमीरणं नरो यः पिवतीहानिशमेव वीततन्त्रः ।
भवति ध्रुवमेव तस्य वर्षाच्छ्रवणं दर्शनमप्यतीव दूरात् ॥ ३९ ॥
बहुधा कथितैर्मुहुः किमेभिर्द्विकचञ्च्वा तु समीरणस्य पानात् ।
जरसा सह नाशमाशु याति प्रबलं मृत्युकृतं भयं नराणाम् ॥४०॥

---

राजदन्तेति । राजदन्तयुगलद्वयस्यादिमस्पृशन् तेषाम् अन्तिके समीपे जिह्वां सन्निधाप्य काकचंचुपुटेन वायुं पिवेत् । काकचंचुपुटवन्मुखं कृत्वा पिवेदित्यर्थः । मध्यभूतदन्तचतुष्टयं राजदन्ताः एतदुत्कृष्टं वायोर्नियमनमिति ॥ ३४ ॥

द्विकेति । द्विकचंचुभ्यां समीरणं वायुं धयतः पिवतः धेट् पा पाने । द्वाभ्यां ककाराभ्यां लक्षितो द्विकः काकः श्रमदाहं गरोविषम् उदरामयम् उदररोगः ज्वरः गुल्म इत्याद्याः प्रशमं प्रयान्ति ॥ ३५ ॥

उभयोरिति । उभयोः प्रातः सायं सन्ध्ययोर्मुहूर्त्ते दण्डद्वयं यावत् प्रहरत्रयमात्रं वा कं श्मश्रु तस्य धातुः धर्त्तुः पुंसः काकचंचुपुटमारुतं पिवतः सारस्वतसिद्धिर्भवति सन्ध्यामुहूर्त्तमात्रं प्रहरत्रयं वेत्ति व्यवस्थितविकल्पार्थः ॥ ३६ ॥

विषमिति । काकोलः त्रयं सुगमम् ॥३७-४०॥

जिह्वां कृत्वाऽनाकुलस्तालुमूले दन्तैर्दन्तान् गाढमापीडयित्वा ।
मन्दं मन्दं यः पिबेद्गन्धवाहं सौधैः पूरैः साकमन्तः स्पृशद्भिः ॥४१॥
षण्मासाभ्यासेन रोगैरशेषैः पातेभ्योऽसौ मुच्यते साधकेन्द्रः ।
अब्दादेकाद्विश्रसां मृत्युदूतीं जित्वा भूमौ दीर्घकालं स जीवेत् ॥४२॥
वर्षत्रयाभ्यासवशादतीतमनागतं वेत्त्यलिनीलकेशः ।
विषं न देहे क्रमते तदीये दष्टे सुघोरैरपि पन्नगेन्द्रैः ॥ ४३ ॥
न कृत्रिमं स्थावरजङ्गमं वा विषं क्रिमन्यैरपि कालकूटैः ।
गुणाष्टकं कालवशादुपेत्य महीतले क्रीडति भैरवो वा ॥ ४४ ॥
या मुण्डाधारदण्डान्तरविवरगताहारनीहारगौरी
सौधीं धारां नभोऽम्भोरुहकुहरविशेषैः संस्रवन्तीं वहन्ती ।
तस्या वज्राख्यनाड्याः खगमुदरदरीमध्यगं या विदध्यात्
तस्या ब्रह्माण्डभाण्डप्रलयमपघनं स्याद्घनं मृत्युमृत्योः ॥ ४५ ॥

---

जिह्वामिति । तालुप्रदेशे जिह्वां योजयित्वा उपरिस्थदन्तपङ्क्त्याऽधो दन्तावलि आपीड्य सौधैः पूर्वमुखावस्थितैः सह गन्धवाहं वायु पिबेत् अन्यत् सुगमम् । प्रकारान्तरमाह जिह्वामिति । सौधैर्मुखान्तर्गतरसैः विस्रसां जरां कृत्रिमविषं नारिकेलमिश्रितकर्पूरं स्थावरं हिमशैलजादिकं जङ्गमं पार्वतीयं व्याघ्रनाभिजन्यं गुणाष्टकम् अष्टसिद्धिर्भैरवावतारार्थे वाशब्दः ॥ ४१-४४ ॥

या मुण्डेति । सुषुम्नान्तर्गताया वज्राख्यनाड्या उदरमेव दरी कन्दरा तन्मध्यवर्त्तिनं खगं वायुं यो विधानं करोति तस्य पवनं शरीरं मृत्युमृत्योर्धनं मुद्गरं भवति । मृत्युर्यमः तस्य मृत्युर्नाशकः तस्य लोहमुद्गरो भवति । घनः स्याल्लोहमुद्गर इत्यमरः । सा का मुण्डाधारदण्डाधारदण्डान्तरविवरगर्त्ता मुण्डस्याधारभूतो दण्डः पृष्ठवंशात्मकः तदन्तर्गतसुषुम्ना तन्मध्यवर्त्तिनमित्यर्थः । कीदृशाहवे हिमवच्छुभ्रामृतधारां वहन्ती धारयन्ती आकाशदेशावस्थितपद्मा-

शुषिरेण वेष्टयेत्समन्तादथ मन्त्री महनीयमन्त्रराजम् ।
सुविशुद्धसुवर्णपट्टबद्धं विदधीतात्मकृतादिसिद्धमेनम् ॥ ८ ॥

इय रक्षा साक्षात्त्रिपुरमथनेनापि विभुना
श्रियः कान्तेनापि त्रिदशगुरुणा चापि हरिणा ।
धृता कन्दर्पेणाप्यमृतकिरणेनापि विनता
तनूजेनाप्येषा सततमपि शीतेतररुचा ॥ ९ ॥

गन्धर्वैरपि किन्नरैरपि धृता यक्षैः सदा राक्षसैः
सिद्धैः साध्यगणैश्च पन्नगवरैर्विद्याधरैर्गुह्यकैः ।
सौभाग्यार्थिभिरेव शुद्धहृदयैरम्यैर्जगन्मङ्गलैर्मङ्गल्या
मनुजोत्तमैरपि नृपैर्वश्यार्थिभिः कामिभिः ॥ १० ॥

इह बन्धुरगन्धसिन्धुरैर्मदधाराविनिलिप्तगण्डपिण्डैः ।
तुमुले युधि यन्त्रराजशक्त्या समवाप्नोति जयश्रियं नरेन्द्रः ॥११॥

नरपालगृहे दुरोदरे व्यवहारेऽपि च धारणादमुष्य ।
मनुजोऽपि च वादिभिर्विवादे जयमाप्नोति यन्त्रसत्तमस्य ॥१२॥

---

वाग्भवं विन्दुः सनादो हकारः ऐकारसकारहकारभिन्नैः ककारादिवर्णैरित्यर्थः । विन्दुनादकलात्मिकामिति । भुवो मन्दिरं चतुरस्रं भुवो मन्दरमिति पाठे मन्दरं क्षकारः तन्मध्ये इत्यर्थ । तथाच—क्षकारो मन्दरः प्रोक्तः क्षकारो मेरुसंज्ञक इति । शिवेन हकारेण वेष्टयेत् । आत्मकृतादिसिद्धिप्राणप्रतिष्ठादिसम्पादितान्तम् । विभुना ब्रह्मणा श्रियः कान्तेन विष्णुना प्रसन्नगुरुणा वृहस्पतिना इयं रक्षा धृता ॥ ९-१० ॥

बन्धुरः अमनोरथः गन्धः येषां हस्तिनां महास्तिभिरित्यर्थः । तुमुले रणे दुरोदरे द्यूते व्यवहारे लोकव्यवहरणे लुलापो महिषः चित्रकायो व्याघ्रविशेषः द्विपो हस्ती भल्लुको जन्तुविशेषः प्रसिद्धः । एतत् कुलाकुलेषु बलेषु सलीलयाता सलीलं गमनं यस्याः संहृतिकर्म संहृतिकर्मणि मारणकर्मणि कर्मनिपुणं दहनोऽग्निः तुहिनति तुषारस्तुहिनं हिमं हिमवदाचरति ।

विपिनेषु लुलापचित्रकायद्विपभल्लूककुलाकुलेषु पुंसाम् ।
चरतां न चिराय विद्यते भिस्त्रिपुरायन्त्रवरस्य धारणेन ॥१३॥
नरनाथवरा भवन्ति वश्यास्तदधीनाः सचिवाश्च तत्तनूजाः ।
प्रमदाः समदाश्च यौवनाढ्याः स्तनभारनमिताः सलीलयाताः ।१४।
विषमुग्रमपीह कालकूटप्रतिमं संहृतिकर्म कर्मठञ्च यत् ।
अमृतं भवति ध्रुवं तदेतद्दधतस्त्रैपुरयन्त्रराजमेनम् ॥ १५ ॥
दहनस्तुहिनत्यसौ दवान्तर्विततोर्द्धीकृतभूरिलोलकीलः ।
धृतयन्त्रवरस्य देहभाजः पयसाञ्चापि निधिः स्थलायतेऽयम् ।१६

हृत्पपङ्केरुहकर्णिकोपरिदले मन्त्री तु यन्त्राधिपम्
ध्यात्वा शक्तिगमागमं प्रकुरुते धीरः सुषुम्नान्तरे ।
यस्तं शश्वदखण्डपुण्यनिलयं वाक् कामिनी गोमिनी
सामानाधिकरण्यसम्पदतुला नोमुञ्चति क्षमातले ॥ १७ ॥

आदौ मन्मथकोष्ठकोदरगतं कामाधिराजं लिखेत्
कन्दर्पद्वितयेन चाथ पुटितं कुर्यात्तदेतद्‌द्वयम् ।
धीरोथो मकरध्वजं परिलिखेत् कोणेषु षट् स्वादरान्
मध्ये नाम मनोभवस्य सकुलं कुक्षौ तदेतत्क्षिपेत् ॥ १८ ॥

---

कीदृशो दहनः दवान्तर्विततोर्द्धीकृतपरिलोलकीलः । दवोवनाग्निः तदन्तर्मध्ये वितता विस्तीर्णा ऊर्ध्वं कृता च भूरिलोला चञ्चला कीला ज्वाला येन सः । वह्नेद्वयोर्ज्वालकीला वर्चिर्हेतिः शिखास्त्रियामित्यमरः । हृत्पद्मे भूकर्णिकोपरि हृदयकमलकर्णिकामध्ये यन्त्रराजं ध्यात्वा मूलविद्यां जपन् मूलाधारात् कुण्डलिनीं चिण्मयीं शक्तिमुत्थाप्य ब्रह्मनाड्या द्वादशान्तं नीत्वा तदन्तर्गतया सूत्रधारया अभिषिच्यमानं मूलाधारं नयेत् एवं पुनः पुनरभ्यासात् वाक्कामिनी सरस्वती गोमिनी लक्ष्मीः एकाधिकरणे सम्पद् यस्याः सा एवम्भूता तं पुरुषं न मुञ्चति ॥ ११-१७ ॥

यन्त्रान्तरमाह आदाविति । आदौ कामबीजस्यादौ त्रिकोणमध्ये

यन्त्रं पूर्वोक्तयन्त्राधिपसदृशमिदं चापि मौलौ गले वा
बाहौ वा यो बिभर्त्ति त्रिभुवनमखिलं तद्वशे वर्त्तते च ।
कान्ताः कान्तालकान्ताः पृथुकठिनकुचा नम्रकम्राङ्गयष्ट्यः
कामेनोपद्रवन्त्याकुलितनिजधियस्तं सदोल्लासिचित्तः ॥१९॥
ध्यात्वैवं मूलचक्रान्तरकमलकुटीकोटरे यन्त्रराजम्
साध्यं सानन्दमन्दं तरुणतरणिभाभास्वराङ्गञ्च तञ्च ।
यन्त्रान्तः सुस्थसाध्यामलरुचिविलसच्चेतनामात्ररूपम्
दृष्टोऽवष्टभ्य मन्त्री मथनमथशरैराचरेदात्मशक्त्या ॥ २० ॥
भवत्यवश्यं मथनेन वश्यः साध्यः सदा साधकपुङ्गवस्य ।
त्रिःसप्तरात्रेण महानुभावो देवोऽपि मर्त्यः किमु मन्दवीर्यः ॥२१॥
कलापत्रोपेतं कमलमभिसंलिख्य सुमना-
स्तदन्तः श्रृङ्गाटद्वितयमपि चान्योन्यपुटितम् ।

---

कामबीजं क्लीङ्कारं लिखेत् । तत्त्रिकोणं कन्दर्पाभिवतेन षट्कोणाकारेण वेष्टयेत् । षट्कोणेषु मकरध्वजाद्यं ब्लूङ्कारं लिखेत् । एतत् सर्वं मनोभवाद्येन स्त्रीँकारेण वेष्टयेत् मनोभवस्य कुक्षौ मनोभवबीजमध्ये साध्यसाधकनाम लिखेत् ॥ १८-१९ ॥

साध्यस्य मूलाधारे कमलकर्णिकामध्ये इदं कामबीजयन्त्रं ध्यात्वा साध्यं तन्मध्ये बालदिवाकरसङ्काशम् आनन्दमन्दं चेतनामात्ररूपं ध्यात्वा देशिकोपदेशक्रमेण स्वशक्त्या मथनं कुर्यादित्याह ध्यात्वैवमित्यादि । आत्म-शक्त्या कुण्डलिन्या मथनवायुसञ्चारयागादमृतोत्प्लावनम् आचरेत् । दक्षिण-वर्त्मना इति केचित् । तच्चिन्त्यम् ॥ २०-२१ ॥

मन्त्रान्तरमाह । कलापत्रं षोडशदलात्मकं पद्मं विलिख्य तत्कर्णिकायां श्रृंङ्गाटद्वितीयाख्यं षट्कोणं विलिख्य तन्मध्ये देवीहृदयं ॐ ह्रीं नमः इति यन्त्रं लिखेत् । षट्कोणेषु पञ्चसु कामञ्च ह्रीं क्लीं ऐं ब्लूं स्त्रीं इति विलिख्य अन्तिमकोणे आख्याम् अभिमतसाध्यनाम लिखेत् । षोडशदलेषु

लिखेन्मध्ये देवीहृदयमथ कोणेषु मदनान्
तदन्तः षट्स्वाख्यां समभिमतसाध्यस्य मतिमान् ।।२२।।
स्वरान्पत्रेष्वेतच्छुषिरजठरान्तः परिलिखेज्जग-
त्यस्मिन्यन्त्रं प्रथितमिह यन्त्रामृतमिति ।
जनस्यैतद्यन्त्रं वरकमलपट्टेषु विहितम्
जगत्सर्वं सद्य भवति वशवर्त्तीह वहतः ॥ २३ ॥

इति त्रिपुरासारसमुच्चये सप्तमः पटलः ॥

# अष्टमः पटलः

अथ त्रिलोकार्चितशासनाया वक्ष्यामि बाह्यार्चनमम्बिकायाः ।
यदर्चनीयत्वमुपैति कुर्वन्नुर्वीतले सर्वजनैर्मनुष्यः ॥ १ ॥
शुद्धे मनोज्ञे पशुदृष्टिपातविवर्जिते भूमिगृहे गृहे वा ।
पूर्वोक्तमार्गेण कृतात्मशुद्धिः स्थानस्य शुद्धिं विदधीत पश्चात् ।।२।।

---

स्वरूपान् षोडशस्वरान् सबिन्दुकान् लिखेत् । शुषिरजठरान्तः प्रविलिखेत् । शुषिरजठरे वृत्तोदरे क्षिपेत् । एतद्यन्त्रं वहतो जनस्य जगद्वशवर्त्ती भवति इह संसारे ॥ २२-२३ ॥

इति त्रिपुरासारटीकायां पदार्थादर्शे सप्तमः पटलः ।



एवं यन्त्ररचनाकथानान्तरं बाह्यपूजाविधानं वक्तुमुपक्रमते अथेति । यदिति य त् कुर्वन्नरः सर्वजनैरर्च्चनं यन्त्रमुपैति प्रथमं स्नानादिनात्मशुद्धि विधाय भूमिगृहे पातालगृहे नीरन्ध्रेगृहे वा यथा उद्ग्रीविकया केनापि लक्ष्यते ॥ १ ॥

एतादृशे गृहे यागमण्डलं परिकल्पानन्तरं जलगोमयाभ्यां शोधयेदित्याह शुद्ध इत्यादिना ॥ २ ॥

भगतः परमास्यपूर्वयुक्तं गगनं सानलवामदृक् तथैव ।
कुशतोयसमुक्षणात्क्षमेयं मनुनानेन विशुध्यते समन्तात् ॥३॥
अकुलं सकुलादितर्कबीजं शिरपूर्वेण युतं सहेन्दुखण्डम् ।
अमुना मनुना समाहितात्मा तनुयाद् द्रव्यसमुक्षणं कुशाद्भिः ॥४॥
पुष्करं शिवमुखादिसंयुतं पात्रशुद्धिमनुरेष कीर्त्तितः ।
क्षालयेदमलवारिभिस्ततः पात्रजालममुनैव मानवः ॥ ५ ॥
विलिम्पेत्ततः पीठमम्भोविधौतं स्वयम्भूतपुष्पेन्दुकस्तूरिकाभिः ।
सकाश्मीरगोरोचनाभिः समन्ताल्लिखेदत्र यन्त्रं ततो वक्ष्यमाणम् ।६
त्रिकोणं विलिख्यानुवृत्तं दलानाम् ततः पञ्चकं तद्बहिश्चापि वृत्तम् ।
पुनः षड्दलं बाह्यतश्चापि वृत्तम् लिखेदष्टपत्राणि तद्बाह्यदेशे ॥७॥

---

भगतः भग एकारः । तत्पर ऐकारः आस्यं विसर्जनीयः । तत्पूर्व-युक्तम् अनुस्वारयुक्तम् । गगनं हकारः अनलो रेफः वामदृक् ऊकारः तथैव पूर्वोक्तबिन्दुरनुवृत्तः । तेन ऐं ह्रीं इति मन्त्रेण कुशतोयसमुक्षणादियं युग्मा पृथिवी अनेन मनुना शुध्यते ॥ ३ ॥

द्रव्यशुद्धिमाह । अकुलं हकारः कुलं सकारः । तस्यादितर्काक्षरं तत्प्रातिलोम्येन षष्ठाक्षरं रेफः शिव उकारः तत्पूर्वं ईकारः इन्दुखण्डोबिन्दुः तेन ह्रीं इति मन्त्रेण द्रव्यशुद्धिं कुर्यात् ॥ ४ ॥

पात्रशुद्धिमाह पुष्करमित्यादिना । पुष्करमाकाशं तद्बीजं हकारः शिव उकारः मुखं विसर्जनीयः । तदादिः बिन्दुः । तेन हूंमिति मनुना पात्रशुद्धिं कुर्यात् ॥ ५ ॥

स्वम्भूतादिद्रव्यैर्लिप्ते पीठे यन्त्रं लिखेत् । स्वयम्भूतमित्याद्यनुपादेयत्वान्न लिखितं गुरुमुखादेव ज्ञातव्यम् । त्रिकोणं विलिख्य तद्बाह्ये वृत्तं पञ्चदलानि तद्बहिर्वृत्तं तद्बहिः षड्दलं तद्बहिर्वृत्तं तद्बाह्येऽष्टदलं चतुर्द्वारोपेतं च कार्यमिति शेषः ॥ ६-७ ॥

पीठस्योत्तरभागे गुरुपंक्तीः पूजयेद्विधिवत् ।
वायव्यदिग्भागादारभ्येशानपर्यन्तम् ॥ ८ ॥
आधारशक्तिमासनमूलेऽनन्तञ्च सम्पूज्य कूर्मम् ।
तदुपरि पृथिवीमपि गन्धाद्यैः समर्चयेन्मन्त्री ॥९॥
पीठस्याग्नेयादिषु चतुर्षु कोणेषु पूजयेत्क्रमशः ।
धर्मादीन् गन्धाद्यैश्चतुरोऽधर्मादिकांस्ततोदिक्षु ॥ १० ॥
पीठस्योपरि सत्त्वरजस्तमसां तृतयञ्च सम्पूज्य ।
तदुपरि पद्मं पद्मे वसुरविशशिमण्डलानि यजेत् ॥ ११ ॥
प्रेतं त्रिकोणमध्यगं शशिमण्डलमध्यमे यजेत्तदनु ।
तदुपरि शङ्करदयितां हृदयाम्बुजगह्वरात् समावाह्य ॥ १२ ॥
संस्थाप्य सन्निरुध्य सन्निधाप्य च सम्प्रनिरुध्य प्रदर्शयेन्मुद्राम् ।
गुह्याख्यामनुपूजामर्घ्यादि समाचरेद्विधिवत् ॥ १३ ॥

---

अर्घ्यस्थापनादिप्रसिद्धत्वान्न लिखितं पीठस्योत्तरभागे गुरुपंक्तोः स्वनामभिः पूजयेत् । वायव्यादीशानपर्यन्तं प्रह्लादानन्दनाथ-सकलानन्दनाथ-कुमारानन्दनाथ-वशिष्ठानन्दनाथ-शुकानन्दनाथ-विमलानन्दनाथ-व्यालानन्दनाथ-श्रीपादुकां पूजयामीति सर्वत्र योज्यम् ॥ ८ ॥

आसनमूले आधारशक्ति पूजयेत् । पीठस्य चतुष्कोणेषु अग्नीशाननिर्ऋतिवायुषु धर्मादीन् धर्मज्ञानवैराग्यैश्वर्याणि दिक्षु पूर्वपश्चिमदक्षिणोत्तरेषु अधर्मादीन् अधर्माज्ञानावैराज्ञानैश्वर्यान् सत्त्वादित्रितयम् आदिवीजसहितमित्यर्थः। तदुपरि पद्मं पद्मे वसुरविशशिमण्डलानि प्रणवत्रितयवीजयुक्तानीति अकारोकारमकारवीजानीत्यर्थः । तदुपरि प्रेतं परमसदाशिवं मन्त्रस्तु हेसौः सदाशिवमहाप्रेतपद्मासनाय नमः। तदुपरि हृदयानन्दशिवां शङ्करदयितां करस्थपुष्पाञ्जलौ विरेचान्तः संस्थापनमुद्रया संस्थाप्य सन्निधिकारिण्या मुद्रया सन्निधाप्य सन्निरोधनमुद्रया सन्निरुध्य अवगुण्ठनमुद्रयावगुण्ठ्या

वामे त्रिकोणकोणे पाशांकुशकरां तप्तहेमसङ्काशाम् ।
रतिमर्चयेन्मनोहरवेशां पश्चात् स्वबीजेन ॥ १४ ॥
प्रीतिं दक्षिणकोणे निजबीजेनार्चयेच्च शङ्खनिभाम् ।
अंकुशहस्तां सुमुखीमुज्ज्वलवेशां सुगन्धाद्यैः ॥ १५ ॥
आसीनं कुसुमायुधमग्रे देव्याः समर्चयेन्मन्त्री ।
बन्धूककुसुमवर्णं करधृतकोदण्डशरम् ॥ १६ ॥
कामस्य कामबीजं वाग्भवं समुद्दिष्टं रतिबीजम् ।
सम्मोहनाख्यमन्त्यं प्रीतेर्बीजं तथा प्रोक्तम् ।
शरपञ्चकदेवताः स्वमन्त्रैरनुपूज्या दलपञ्चकेषु तेषु ॥ १७ ॥
शशिकाञ्चनसान्ध्यमेघनीलोत्पलमञ्जिष्ठनिभप्रभास्तरुण्यः ।
द्राविण्याद्याः क्रमशः सर्वाभरणशोभिताः समद्राः ।
सव्यकरकलितबाणाः शेषकरैः कृतनमस्काराः ॥ १८ ॥

---

शुद्धाख्यां मुद्रां प्रदर्शयेत् । ततो जीवन्यासः । ततः सकलीकरणम् अग्नीशासुर-वायुकोणेषु पुरतो नेत्रं दिक्षु चास्तञ्च पूर्वोक्तषडङ्गमन्त्रैः क्रमेणाभ्यर्च्य षोडशोपचारैः सम्पूज्य आवरणदेवताः सम्पूजयेत् ॥ ९-१३ ॥

तदेवाह वाम इति । देवीवामे प्रकृतवामभाग इत्यर्थः । तप्तहेमप्रभाम् अतिरमणीयवेशां पाशांकुशकरां रतिं वाग्भवबीजेनाभ्यर्चयेत् ॥ १४ ॥

दक्षिणाग्रेण शङ्खनिभामतिसुन्दरवेशां सुमुखीम् अंकुशकरां प्रीतिं तृतीयबीजेनाभ्यर्च्य देव्या-अग्रेऽग्रकोणाग्रे बन्धूककुसुमसङ्काशम् इषुचापधरं कामबीजेनाभ्यर्चयेत् ॥ १५-१६ ॥

एतेषां बीजमाह । कामस्य कामबीजं वाग्भवं सम्मोहनबीजम् अन्त्यं द्रावणबाणादिपञ्चकान्त्यं स इति ॥ दलपञ्चकेषु शरान् पूर्वादिक्रमेण पूजयेत् ॥ १७ ॥

द्रां द्राविण्यै नमः । क्लीं क्षोभिण्यै नमः । ब्लीं वशीकरिण्यै नमः ।

ततो भगाख्यां भगजिह्विकाञ्च देवीं भगास्यां भगमालिनीञ्च ।
यजेद्भगाक्षीञ्च दलेषु षट्सु तथा भगाह्लादिनिकां क्रमेण ॥१९॥
शरदम्बुदधूम्रसान्ध्यमेघफलिनीरात्रिसुवर्णवर्णतुल्याः ।
रुचिराभरणोज्ज्वलास्तरुण्यो मदिरानन्दितमानसा मनोज्ञाः ॥२०॥
करैः खड्गशूलाहिवेतालदण्डान्सकुन्ताब्जैर्विभ्रतीं खेटकञ्च ।
परैर्विस्मयं नुः कपालस्य खण्डं तनुं दुन्दुभिं नादबिन्द्वाख्यमुद्रे २१
कथयामि भगादिदेवतानामिह बीजान्यपि वाग्भवं सदण्डम् ।
वसुवामदृगिन्दुखण्डयुक्ते कुलपूर्वानलगाम्बरे क्रमेण ॥ २२ ॥
ब्रह्माणीं हंसयानां द्रुतकनकनिभामब्धिवक्त्रां त्रिनेत्राम् ।
हस्ताब्जैर्ब्रह्मकूर्चं कमलमपि लसत्कुण्डमब्जाक्षमालाम् ॥
बिभ्राणां चारुवेशामथ हरिहयदिक्पत्रमूले यजेत्ताम् ।
गन्धाद्यैर्बन्धुराङ्गीं वहति वरजटाजूटभारं सदा या ॥ २३ ॥

---

क्लूं प्रकाशिन्यै नमः । कर्पूरकनकसान्ध्यमेघेन्द्रनीलमञ्जिष्ठाः तत्प्रभाः सव्यकरकलितवाणाः शेषकरकृतनमस्काराः प्रमदाः क्रमेणाभ्यर्च्याः ॥ १८ ॥

ततो भगादिदेवताः पूजयेत् । ऐं श्रीं ह्लीं भगायै नमः । ऐं श्रीं ह्लीं भगजिह्विकायै नमः । ऐं श्रीं ह्लीं भगाह्लादिन्यै नमः । यथोपदिष्टः सायुधकरा भवनधराः पूर्वनैर्ऋतवायव्याग्नेयपशुपतिवारुणेषु क्रमेणाभ्यर्च्याः ॥१९॥

फलिनो प्रियंगुः रात्रिर्हरिद्रा क्रमेण द्वे द्वे अस्त्रे दधती प्रथमायाः शूलखड्गौ द्वितीयाया अहिवेतालदण्डौ कुन्तखेटके तोमरविस्मयमुद्रे नरखण्डकपालतनुदुन्दुभिनादबिन्दुमुद्रे ॥ २०-२१ ॥

एतासां बीजमाह । वाग्भव ऐकारमात्रं सदण्डं कुलपूर्वानलगः कुलं दकारः तत्प्रातिलोम्येन अनलगं तृतीयमक्षरं शकारः । अम्बरं हकारः शकारहकारौ रेफेकारबिन्दुयुक्तौ तेन ऐं श्रीं ह्लीं बीजत्रयात्मकेन मन्त्रेण भगादिदेवताः पूजयेत् ॥ २२ ॥

माहेशीं तां कपालोज्ज्वलडमरुवराभीतिशूलोरुटङ्कान् ।
बिभ्राणां बाहुदण्डैर्निविडहिमनिभामग्निदिक्पत्रमूले ॥
नेत्रल्लासमानां त्रिभिररुणजटाकोटिबद्धेन्दुखण्डाम् ।
गन्धाद्यैः पूजयेत्तां वृषभमुडुनिभं या समारुह्य याति ॥ २४ ॥
कौमारीं यौवनाढ्यां सुरुचिरवदनां कुंकुमाभां सुशोभाम् ।
शक्तिं पाशांकुशौ या वहति निजकरैर्दक्षिणे चाभयञ्च ॥
हालालोलां विशालामलनयनयुगामर्चयेद्गन्धपुष्पैः ।
सर्वालङ्कारयुक्तां शिखिनि यमदिशां पत्रमूले निषण्णाम् ॥२५॥
रक्षोदिक्पत्रमूले सजलजलधरश्यामलाङ्गीं सुकेशीम् ।
घण्टां कम्बुं कपालं रथचरणमथो बिभ्रतीं बाहुदण्डैः ॥
आसीनां वैनतेये मणिमयमुकुटोद्भासितां वैष्णवीं ताम् ।
गन्धाद्यैरर्चयेत्तां मधुमदमुदितां नित्यमालोलदृष्टिम् ॥ २६ ॥
वाराहीं खेटकासृग्धटहलमुपलान्बिभ्रतीं पोत्रिवक्त्राम् ।
पाश्चात्ये पत्रमूले मणिमयविलसत्कुण्डलोद्घुष्टगण्डाम् ॥
या शश्वद्विश्वपूज्या गिरिशिखरखरा ( घरा ) भीमकोले निषण्णा ।
गन्धाद्यैरर्चयेत्तां सुरुचिरवदनां धूमधूम्राङ्गकान्तिम् ॥ २७ ॥

---

ततो देवी पूर्वादिदलेषु ब्रह्माण्याद्यष्टशक्तयः पूज्या इत्याह ब्रह्माणी-ब्रह्मकूर्चम् । कुशमयब्राह्मणः हरिहयदिक्पत्रमूले पूर्वदले ॥ २३ ॥

अग्निदले माहेशीं पूजयेत् । कीदृशी कपालोत्तमडमरुवराभीमशूलो-रुटङ्कान् कपालं नरशिरःखर्परम् उत्तमम् उद्भटं सडमरुवरं डमरुश्रेष्ठम् आभीमं भयानकं शूलम् उरु महत् टङ्कः पाषाणदारणः । एतान् बिभ्राणा धारयन्तीम् ॥ २४ ॥

याम्ये कौमारीं शिखिनि मयूरे निषण्णाम् ॥ २५ ॥

नैर्ऋते वैष्णवीम् ॥ २६ ॥

इन्द्राणीं चन्द्रविम्बप्रतिमनिजमुखीमिन्द्रनीलाभवर्णाम् ।
कर्णान्ताक्रान्तनेत्रां मणिमयमुकुटां वायुदिक्पत्रमूले ॥
चापं कम्बुञ्च वज्रं शरमपि दधतीं हस्तपद्मैश्चतुर्भिः ।
स्वर्मातङ्गे निषण्णां सुरवरविनुतामर्चयेन्नित्यमत्ताम् ॥ २८ ॥
चामुण्डां चण्डहासोद्भटविकटरदां भीमवक्त्रां त्रिनेत्राम्
खड्गं शूलं कपालं निजकरकमलैर्विभ्रतीं खेटकञ्च ।
निर्मांसां रक्तनेत्रां त्रिभुवनभयदां सौम्यदिक्पत्रमूले
कालीं कङ्कालभूषां पितृवननिलयामर्चयेदूर्ध्वकेशाम् ॥ २९ ॥
पश्चादाश्चर्यरूपां सुरुचिरवदनां शुद्धजाम्बूनदाभाम्
हस्ताब्जैरक्षसूत्राभयकमलल्लसन्मातुलुङ्गीफलानि ।
विभ्राणामर्चयेत्तां त्रिभुवनजनताभ्यर्चितां लक्षणाढ्याम्
लक्ष्मीमुत्तुङ्गपीनस्तनभारनमितामीशदिक्पत्रमूले ॥ ३० ॥
वीजान्यमूषामथ वक्ष्यनन्तो दीर्घं नभोऽन्तं नयनान्तमिन्द्रः ।
प्रांशुर्दृगन्तान्तपरं कुलान्तमनन्तरुद्रेण ततः समेतम् ॥ ३१ ॥

---

पश्चिमे वाराहीं कीदृशीं गिरिशिखर इव शिखरः स चासौ खरः प्रखरः आभीमो भयानश्च कोलः शूकरस्तस्मिन्निषण्णां धूम्रेति अतिशयधूम्रवर्णाम् ॥ २७ ॥

वायौ इन्द्राणीं स्वर्मातङ्गे ऐरावते च युक्ताम् ॥ २८ ॥

कौबेरे चामुण्डां कीदृशीं चण्डहासोद्भटविकटरदां चण्डहासेन उद्भटा उग्रा विकटा भयङ्करा रदा दन्ता यस्याः तां पितृवनं श्मशानम् ॥ २९ ॥

ईशाने लक्ष्मीं पूजयेत् । जाम्बूनदाभां सुवर्णवर्णाभामित्यर्थः ॥ ३० ॥

आसां वीजान्याह । अनन्तः आकारः नभो हकारः अन्तः क्षकारः सदीर्घम् आकारेण युक्तं तेन ह्रां क्षां इति ब्रह्माणीवीजद्वयम् । नयनान्तमीकारः इन्द्रो लकारः प्रांशुः आकारः तद्युक्तं तेन ईं लां माहेशीमनुः । दृक् उकारः

तिथीशः सानन्तो भृगुरथ हरोऽनन्तसहितो
वक्रान्तो भीतीशस्तदनु च वकोऽनन्तसहितः ।
कपूर्वं सूक्ष्मान्तान्वितमथ वनं चानु वदनम्
शचीनाथोपेतं गगनमपि कान्तान्वितमथ ॥ ३२ ॥

अथासिताङ्गं रुरुचण्डसंज्ञौ क्रोधीशमुन्मत्तकपालिनौ च ।
पलाशमध्येष्वपि भीषणाख्यं संहारसंज्ञञ्च यजेत्क्रमेण ॥ ३३ ॥
दधतोऽञ्जनमेघपुञ्जवर्णानुरुवेतालकपालशूलदण्डान् ।
लघुदुन्दुभिसंयुतांस्त्रिनेत्रान्करदण्डैः करिहस्तदण्डचण्डैः ॥३४॥
गजकृत्तिनिवर्त्तितोत्तरीयान्भ्रुकुटीसङ्घटितैर्ललाटपट्टैः ।
कुटिलालिकुलाभकुन्तलाग्रान्मुदितान्तः करणान्सुयौवनाढ्यान् ।३५।
हरात्तृतीयं भगभूतसंयुतं कुलान्तमप्यक्षिविलोचनान्तयुक् ।
निशाकरार्द्धाङ्कितमस्तकञ्च भयेह तेषामपि बीजमीरितम् ॥३६॥

---

तत्परम् ऊकारः तत्परं भकारः । कुलं सकारः तदन्तो हकारः अनन्तेन आकारेण रुद्रेण रेफेण च समेतः तेन ऊं ह्रां कौमारीबीजमुखम् ॥ ३१ ॥

तिथीशः ऋकारः सानन्तः साकारः भृगुः तेन ऋं सां वैष्णवीमन्त्रः । हरो हकारः वकः शकारः तदन्तः षः तेन हां षां वाराहीमन्त्रः । भीतीशः ऐकारः वकः शकारः अनन्तः आकारः तत्सहितः तेन ऐं शां इन्द्राणी-मन्त्रः । को बिन्दुः तत्पूर्वं औकारः जलं वकारः सूक्ष्मा इकारः स एवान्तो यस्य आकारस्य तेन औं वां बीजं चामुण्डामन्त्रः । वदनं विसर्जनीयम् । अनुवदनम् आकारः शचीनाथोपेतं गगनम् इकारः कान्तान्वितम् अनुस्वारेण युतम् अः ह्रीं महालक्ष्मीमन्त्रः ॥ ३२ ॥

पत्रमध्ये अष्टौ भैरवाः सम्पूज्या इत्याह अथेति । असिताङ्गो रुरुश्चण्डः क्रोधीश उन्मत्तकपालिभीषणसंहाराः वेतालदण्डकपालशूललघुडमरुदुन्दु-भिहस्तान् चतुर्भुजान् ॥ ३३-३५ ॥

यो हेतुको यस्त्रिपुरान्तकाख्यो यौ वह्निवेतालहुताशजिह्वौ ।
कालः करालश्च तथैकपादो भीमाकृतिर्यः खलु भीमसंज्ञः ॥ ३७ ॥
ततो नीलजीमूतसङ्काशवर्णान्दलाग्रेषु गन्धादिभिस्तान्क्रमेण ।
त्रिशूलं कपालं स्फुरन्नागपाशं तनुं दुन्दुभिं बिभ्रतो बाहुदण्डैः ।३८।
दंष्ट्राभीमविशालवक्त्रकुहरानेत्रैस्त्रिभिः प्रस्फुर-
द्रक्तैश्च भ्रुकुटीकरालवदनान्कादम्बरीलालसान् ।
ऊर्ध्वीभूतशिरोरुहान्नवनवयोयुक्तांश्च भीमाकृतीन्
भौतीशेन निशाकरार्द्धसहितेनाभ्यर्चयेत्साधकः ॥ ३९ ॥
प्रियङ्गुश्यामाङ्गं परिकलितपाणिं मणिमयो-
ल्लसच्चूडापीडं द्विरदवराधिष्ठिततनुम् ।
सहस्रं बिभ्राणं नयनकमलानां हरिहयम्
यजेत्तं पूर्वस्यां दिशि कुसुमगन्धादिभिरथ ॥ ४० ॥
अथ विकसितकिंशुकाभमग्निं छगलपतिं शितशक्तियुक्तहस्तम् ।
मणिमयमुकुटं यजेत्ससुगन्धैः कुसुमवरैर्धृतरत्नकुण्डलञ्च ॥४१॥

---

बीजमाह । हरात् तृतीयं ऐं भग एकारं तत् भूताक्षरं पञ्चाक्षरम् अनुस्वारं तेन संयुतं तेन ऐं कुली सकारस्दन्तो हकारः अप्पित्तः औं अग्निः रेफः । विलोचनम् ईकारः तदन्त ऊकारः निशाकरार्द्धो विन्दुस्तदङ्कितमस्तकं तेन ऐं ह्रीं एतेन बीजद्वयेनासिताङ्गान् भैरवान् पूजयेत् । ऐं ह्रीं असिताङ्गाय भैरवाय नमः इत्यादि ॥ ३६ ॥

ततोऽन्तकादीन् पूजयेदित्याह इति । हेतुकाय नम ऐं इत्यादिप्रयोगः । हेतुकादित्रिपुरान्तः वह्निर्वेतालः हुताशजिह्वः कालः एकपादः भीमः इत्यष्टौ एतान् चतुर्भुजान् कादम्बरीलालसान् मदिरालालसान् तेषां मन्त्रमाह भौतीशेमेति । भौतीश ऐकारः निशाकरार्द्धसहितेन सार्द्धचन्द्रेण तेन ऐं ॥ ३७-३९ ॥

अर्चयेत्तदनु दक्षिणभागे नीलनीरदनिभं पितृनाथम् ।
दण्डहस्तमरुणायतनेत्रं सैरिभाङ्कतमुज्ज्वलवेशम् ॥ ४२ ॥

नाराकृढां रक्षोदिशि विकटदंष्ट्रं सुनियतम्
कृपाणं बिभ्राणं सजलजलदश्यामलतनुम् ।
यजेद्ध्वालालोलं पलवपलमारक्तनयनम्
विचित्रालङ्कारं तदनु विधिवद्राक्षसपतिम् ॥ ४३ ॥

शरदभ्रशशाङ्कनिभं वरुणं मकरस्थितमुज्ज्वलवेशधरम् ।
मणिकुण्डलमण्डितगण्डतलं वरपाशकरञ्च यजेत्स्वदिशि ॥४४॥
वरसंवरसंश्रृणिशक्तिकरं शुचिकेतनधूमनिभाङ्गरुचिम् ।
निजदिश्यनिलं विधिनाथ यजेत्कुसुमप्रमुखैर्मणिहारधरम् ॥ ४५ ॥

अथोर्णायौ देवं कनकसमवर्णं धनपतिम्
समासीनं यक्षैः परिवृतमशेषैश्च निधिभिः ।
गदाहस्तं पिङ्गाक्षकमलयुगं तं सुकुसुमैर्यजे-
द्गन्धैर्धूपैः स्वदिशि लसदाकल्पमपि च ॥ ४६ ॥
ऐशान्यां शशिखण्डमण्डितजटाजूटं त्रिनेत्रं हरम्
सिन्दूरारुणविग्रहं दिशि यजेच्छूलं कपालं सदा ।
बिभ्राणं सुभुजैश्चतुर्भिरपरां योगाख्यमुद्रां तथा
भस्मोद्धूलितविग्रहं वृषगतिं गन्धादिभिः साधकः ॥ ४७ ॥

मस्तकादिजलराशिगं सकं मस्तकादनलगां वकान्तयुक् ।
सूक्ष्मपूर्वमुखपूर्वसंयुतं लोकपालमनुरेष कीर्त्तितः ॥ ४८ ॥

---

तद्बाह्ये इन्द्रादयः पूज्या इत्याह प्रियंगुश्यामेति । द्विरदनवराधिष्ठिततनुं द्विरदनवरो हस्तिवरः तमधिष्ठिता तनुर्येन तं पितृनाथं यमं संवरणं मृगं शुचिकेतनो धूमः तद्वान्नभाङ्गरुचयो यस्य तम् ऊर्णायुर्मेषः तस्मिन् समासीनं पिङ्गञ्च तत् अक्षकमलयुगमञ्च ॥ ४०-४७ ॥

वटुकगणपदुर्गाक्षेत्रपालान्स्वबीजैरपि
तदनु नमोऽन्तैः साधकेन्द्रः क्रमेण ।
मलयजकुसुमाद्यैरर्चयेद्भक्तियुक्तो
हुतवहपिशिताशाधीशवाय्वीशदिक्षु ॥ ४९ ॥
वसुभ्यो रुद्रेभ्यो दिनपरिवृढेभ्योऽपि च बलिम्
सभूतेभ्यो दद्याद्यजनविधिरित्थं निगदितः ।
अमुं कुर्वन्नुर्वीतलमधि बुधो नित्यमपि यः
स सम्पूर्णान्कामान्गिरिश इव सम्प्राप्य रमते ॥ ५० ॥

इति श्रीत्रिपुरासारसमुच्चये सर्वतन्त्रोत्तमे
अष्टमः पटलः

---

लोकपालानां मन्त्रमाह मस्तकादीति । मस्तकं विन्दुः अं तत्प्रातिलोम्येन चतुर्थमक्षरम् ऐकारं सकं सविन्दुकं मस्तकं विन्दुः तस्मादनलगं तृतीयमक्षरं ककारः वकः शकारः तदन्तः षकारः तद्युक्तः ककारः सूक्ष्मा इकारः तत्पूर्वमाकारं मुखं विसर्जनीयं तत्पूर्वं विन्दुः संयुतं सविन्दुकमित्यर्थः । तेन लक्षां समुदायेन ऐं क्षां इति मन्त्रेण इन्द्रादिलोकपालाः पूज्याः ॥४८॥

ततो वटुकगणपतिदुर्गाक्षेत्रपालान् स्वस्वबीजैः अग्निनैर्ऋतवाय्वीशानदिक्षु पूजयेत् । वं वटुगणेभ्यो नमः गं गणपतये नमः दुं दुर्गायै नमः इति सम्पूजयेत् । तत् ऐन्द्रवारुणयाम्यसौम्यदिक्षु अष्टवसुभ्यो नमः एकादशरुद्रेभ्यो नमः द्वादशादित्येभ्यो नमः इति क्रमेणाभ्यर्च्य ततः परमानन्दामृतसन्दोहस्यन्दनादखण्डसंवित् स्वरूपिणीं भजमानपारिजातलतिकां परमेश्वरीं गन्धपुष्पधूपदीपनैवेद्यान्तैरुपचारैरभ्यर्च्य सकलभुवनोत्पत्तिविभूतिपरिभूतिमूलीभूतां संहारमुद्रया मण्डलकुसुमेनाघ्राय हृदयारविन्दमरविन्दं नीत्वा तन्मयमात्मानं परिभाव्य तदनुगृहीतप्रसाद स्वयममृतानन्दमयो भूत्वा बीजमुक्तो यथासुखं विहरेदिति शुभः ॥ ४९-५० ॥

इति त्रिपुरासारटीकायां पदार्थादर्शेऽष्टमः पटलः ।

# नवमः पटलः

अथाग्निकार्यं कथयामि पूजागृहस्य कुर्याद्दिशी वासवस्य ।
ईशस्य यद्वा दिशि वित्तपस्य विभावसोर्मण्डपमब्धिकोणम् ॥१॥
नवहस्तमात्रमथ शैलदोर्मितं यदि वा हृषीककरसम्मितं मतम् ।
रुचिरैश्चतुर्भिरपरैश्चसमुन्नतं कुशतोरणैः सितवितानशोभितम् ॥२॥
चतुर्द्वारयुक्तं ततस्तस्य मध्ये त्रिधा तद्विभागेन भागैकवेदीम् ।
अरत्निप्रमाणोन्नतां दर्पणान्तर्निभां तां मनोहारिणीं चापि कुर्यात् ।३।
वेदास्रं योनिमर्द्धोडुपनिभमनलास्रं च वृत्तं षडस्रम्
पद्माकारं गजास्रं हरिहयहरिदारभ्य तस्या विदध्यात् ।
मध्ये वृत्तञ्च गौरीपतिसुरपदिशोः पण्डिता केचिदाहुर्वा-
यव्ये पञ्चकोणं दिशि मदनरिपोः सप्तकोणञ्च कुण्डम् ॥४॥

---

एवमिहलोकसुखसाधदनभूतपरदेवतासमवधानकथनान्तरं होमविधानं वक्तुमुपक्रमते अथाग्निकार्यमिति । नियमञ्चाह पूजागृहस्येत्यादि । अयमर्थः वक्ष्यमाणदीक्षामण्डपमध्यस्थवेदिकायाः पूर्वस्यान्दिशि ईशकोणे चासनमपि अग्नौ ईशे अब्धिरकोणं चतुरस्रात्मकं मण्डलं कुर्यात् ॥ १ ॥

अथ दीक्षामण्डपलक्षणमाह नवहस्तमात्रमित्यादि । इन्द्रवारुणयाम्यसौम्यञ्च नवहस्तपरिमितदृढावरणम् । चतुर्द्वारे तोरणोपशोभितं मण्डपं कुर्यादिति । ततः शैलदोर्मितमिति शैलाश्च सप्त समाख्याताः सव्यहस्तपरिमितं हृषीकाणि इन्द्रियाणि तानि पञ्चहस्तपरिमितमित्यर्थः ॥ २ ॥

वेदिकानिर्माणप्रकारमाह ततस्तस्य मध्य इत्यादिना तन्मण्डपत्रिभागैकेन भागेन वेदिकां कुर्यात् यथा प्राक् प्रत्ययसूत्रचतुष्टयेनासकान्या दक्षिणोत्तरा पञ्च तथैव चानयेत् एवं कृते तन्मण्डपं नवपदात्मकं जायते तेषु मध्यपदे वेदिकामरत्नि मात्रोन्नतां दर्पणान्तर्निभां दर्पणमध्यवन्निर्मलीकुर्यात् ॥ ३ ॥

प्राक्सूत्रं प्रथमं निधाय विदधीतार्द्धेन तस्याङ्कितम्
मध्ये मत्स्ययुगं दिशोरमलधीः कीनाशवित्तेशयोः ।
तन्म्यां सूत्रमणि प्रसार्य चतुरः कोणांस्ततो लाञ्छयेत्
क्षेत्रं स्याच्चतुरस्रमत्र रचयेनन्यानि कुण्डान्यपि ॥ ५ ॥
क्षेत्रे क्षिप्त्वा वहिरिह पुरोभूतभागे अंशमेकम्
कोणार्द्धार्द्ध सुनिशितमतिर्भ्रामयेत्सम्प्रगृह्य ।
यावत्कोणं परमपि तथा सूत्रयुग्मस्य पातम्
मध्यात्कुर्याद्भवति तदिदं मन्मथावासकुण्डम् ॥ ६ ॥

---

अवशिष्टेषु पूर्वाद्यष्टदिक्पत्रेषु क्रमेण वेदास्रमित्यादि वक्ष्यमाणेन कुर्यात् । वेदास्रं चतुरस्रं योनिम् अश्वत्थपत्राकारम् अर्द्धोडुपनिभम् अर्द्धचन्द्राकारम् अनलास्रं त्रिकोणं वृत्तं षडस्रं पद्माकारं गजास्रम् अष्टास्रं हरिहयहरिदारभ्य प्राचीं दिशमारभ्येत्यर्थः । शारदातिलके तु आचार्यकुण्डं मध्ये स्याद्गौरी पतिमहेन्द्रयोरित्याचार्यवृत्तं वर्तुलम् । अन्ये त्वेवमाहुः इन्द्रेशानयोर्मध्यावृत्तं वायव्ये पद्मकोणम् ईशकोणे मण्डलकोणं कुर्यात् ॥ ४ ॥

कुण्डप्रस्तारमाह प्राक्सूत्रमित्यादिना । प्रथमं प्राक्प्राच्यग्रसूत्रमास्फाल्य तन्मध्याहितं धृत्वा तन्मानेन दिशोर्दक्षिणोत्तरदिक्षु सूत्रचतुष्टयम् आस्फालयेत् । एवं कृते चतुर्हस्तपादोपेतं समं चतुरस्रं मण्डलं जायते । एतत् कुण्डं पूर्वदिग्गतं भवति एतदेव चतुरस्रम् ॥ ५ ॥

चतुरस्रञ्च कृत्वान्यानि कुण्डान्युद्धरेदित्याहुः क्षेत्रे । क्षिप्त्वेति । कृतचतुरस्रे आग्नेयमारुतनैर्ऋतेशञ्च सूत्रद्वयम् आस्फाल्य पुनश्चतुरस्रं पञ्चावितय एकम् अंशं वहिः क्षिप्त्वा कोणार्द्धार्द्धप्रमाणेन सम्पूज्य भ्रामयेत् कोणशब्देन कोणसूत्रं गृह्यते । तस्यार्ध्वं कोणसूत्रद्वयमध्यसम्पातसंस्थानं तदूर्ध्वं पश्चिमकोष्ठयुगले द्वितीयकोणसूत्रस्थानं तत्प्रमाणतः तत्स्थानात् कोणसंलग्नं भ्रामयेत् एतद्योनिकुण्डम् अग्निदिग्गतम् ॥ ६ ॥

परित्यज्य भागद्वयं पंक्तिभागौ कृतेऽत्रोपरिष्टादधस्ताच्च विद्वान् ।
परिभ्रामयेत्तेन मानेन सम्यग्भवेदर्द्धचन्द्राह्वयं कुण्डमेतत् ॥ ७ ॥
शर्वरीसार्द्धभागीकृतक्षेत्रतः पार्श्वयोर्न्यस्य भागद्वयं पण्डितः ।
तेन मानेन सूत्रद्वयं विन्यसेत्कुण्डमेतद्भवेद्रुद्रनेत्रास्रम् ॥ ८ ॥
दिग्गजादधिकपंक्तिभागतः क्षेत्रतो निशितधीर्वहिर्न्यसेत् ।
भागमेकक्रमनेन सर्वतो भ्रामयेद्भवति वृत्तमुत्तमम् ॥ ९ ॥
भूपांशे अंशद्वयमिह वहिः पार्श्वयोर्न्यस्य मध्यात्
क्षेत्रव्यासे सुविमलमतिस्तेन मानेन कृत्वा ।
पार्श्वद्वन्द्वे झषयुगयुगं सूत्रषट्कोणपातम्
कुर्यात्कुण्डं भवति तदिदं तर्ककोणं मनोज्ञम् ॥ १० ॥
दशांशेऽत्र विन्यस्य बाह्येऽशमेकम् परिभ्राम्य तेनैव वृत्तं दलानाम्

---

अर्द्धचन्द्रकुण्डमाह परित्यज्येति । चतुरस्रं कृतं भूभागं दशधा विभज्य अध ऊर्ध्वं भागद्वयम् ऊर्ध्वं एकम् अध एकं परित्यज्य अग्रे ज्यासूत्रं स्वे स्वे सप्रमाणं पातयित्वा तेन मूले व्यासप्रमाणेन भ्रामयेत् । सूत्रखण्डान्यन्यानि परिमार्जयेत् । एतदूर्ध्वचन्द्राह्वयं कुण्डं दक्षिणदिग्गतम् ॥ ७ ॥

अस्रकुण्डमाह शर्वरीति । सार्द्धभागीकृत इति प्रकृतं चतुरस्रं क्षेत्रम् अष्टधा विभज्य पार्श्वयोः तिर्यक् प्राचीसूत्रपार्श्वयोः प्रत्येकं भागद्वयं वर्द्धयेत् । सूत्रसकलानि परिमार्जयेत् । ऐन्द्रकोणकुण्डं निर्ऋतिदिग्गतम् ॥ ८ ॥

वृत्तकुण्डमाह दिगिति । क्षेत्रतोऽष्टाधिकदशभागे कृते एवं भागं चतुःपार्श्वे वहिर्न्यस्य वृत्ताकारेण भ्रामयेत् । वृत्तखण्डान्यन्यानि परिवर्जयेत् । एतद्वृत्तकुण्डं पश्चिमदिग्गतम् ॥ ९ ॥

षडस्रकुण्डमाह भूपेति । क्षेत्रं इषां भूपांशीकृत्य षोडशधा कृत्वा मध्यसूत्रात् । पार्श्वमेवैकमेकं विन्यस्य पार्श्वद्वन्द्वे मत्स्यचतुष्कं ततः षट्सूत्रं पातयेत् । तेन षट्कोणात्मकं कुण्डं भवेत् तद्वायव्यदिग्गतम् ॥ १० ॥

वहिर्मध्यमे कर्णिकाञ्चापि कुर्याद्भवेदष्टपत्रं बुधः पद्मकुण्डम् ॥११॥
क्षेत्रे क्षिप्त्वात्र बाह्ये दिशि दिशि मिहिरद्वन्द्वकांशे अंशमेकम्
कृत्वानेनाब्धिकोणं पुनरपि मतिमान्कोणतोऽर्द्धं गृहीत्वा ।
तत्कोणाभ्यां विदध्यादिह खलु परितस्तेन मानेन चिह्ना-
नष्टास्त्रं स्यात्समन्तादपिच वितनुयादष्टसूत्रप्रयोगम् ॥ १२ ॥
हयांशेऽत्र भागं वहिर्न्यस्य वृत्तं परिभ्राम्य भूयो युगांशीकृतांशैः ।
त्रिभिः पट्टदीर्घं भवेत्पञ्चसूत्रप्रयोगाद्दिहानेन पञ्चास्त्रकुण्डम् ॥१३॥
क्षेत्रव्यासे दशांशैर्वहिरिह विनिधायैकमंशं सुवृत्तम्
मानेनानेन कृत्वा पुनरपिच चतुःषष्टिभागीकृतेऽत्र ।
पट्टायामप्रमाणं दृढमतिरमुना सप्तिकैस्त्रिंशदंशैः
कुर्यात्सप्तास्त्रकुण्डं भवति हि तदिदं सप्तसूत्रयोगात् ॥ १४ ॥

---

पद्मकुण्डमाह दशांशेति । चतुरस्रं क्षेत्रं दशांशीकृत्य वर्द्धयित्वा वर्त्तुला-कारेण भ्रामयित्वा पुनरपि तेन मानेन भ्रामयित्वा।कुण्डात्मकमध्यवृत्तेन कर्णिकाद्वितयवृत्तेन केशराणि तृतीये चाष्टदलानि पद्मकुण्डं कौवेरदिग्गतम् ॥११॥

अष्टास्त्रमाह क्षेत्र इति । चतुरस्रं क्षेत्र मिहिरद्वन्द्वांशं चतुर्विंशांशं विधाय दिशि दिशि एकमेकम् अलं क्षिप्त्वा वर्द्धयित्वा अब्धिकोणं कृत्वा ततः कोणतोऽर्द्धं गृहीत्वा अन्तश्चतुरस्रकोणार्द्धार्द्धं गृहीत्वा कोणाभ्यां वाह्यचतुरस्र-कोणाभ्यां दिशि दिशि चिह्नानि कृत्वा अष्टसूत्रे पातेनाष्टास्त्रं कुण्डं ईशदिग्गतम् ॥ १२ ॥

पञ्चास्त्रकुण्डमन्याचार्यमतमाह हयांशे इति चतुरस्रं सप्तभागं विधाय एकम् अंशं वहिर्वर्त्तुलत्वेन वर्द्धयित्वा पुनरपि युगांशीकृत्य चतुर्द्धा विभज्य त्रिभिरंशैरायामदैर्घ्यं कृत्वा तञ्च सूत्रप्रयोगं पञ्चकोणात्कं कुण्डं वायुकोण-गतम् ॥ १३ ॥

सप्तास्त्रकुण्डमाह क्षेत्रव्यास इति । अत्र व्यासप्रकृतं चतुरस्रं दशधा विभज्य

यावन्मानं कुण्डविस्तारकस्य तावत्खातस्यापि मानं प्रदिष्टम् ।
कुण्डाकारं पण्डितो यादृशं तत्तादृग्रूपं मेखलाया निदध्यात् ॥१५॥
तिस्रः कुण्डे मेखलामेखले द्वे यद्वा चैकां मेखलां वापि कुर्यात् ।
कुर्यादूर्ध्वं मेखलाया गजौष्ठाकारं योनिं चापि होतुर्दिशीह ॥ १६ ॥
मुष्टिमात्रे तु ता मेखला द्व्यङ्गुलैकाङ्गुलार्द्धाङ्गुलोत्सेधताराः क्रमात्स्युः
रत्निमात्रे तु तास्त्र्यङ्गुलैकाङ्गुलोत्सेधतारा भवेयुः पुनस्ताः ॥१७॥
युगाग्नित्तनेत्राङ्गुलोत्सेधताराः स्युरेताः क्रमाद्धस्तमात्रेऽत्र कुण्डे ।
करद्वन्द्वमात्रे रसाम्भोधिवह्नयङ्गुलोत्सेधतारा भवेयुः पुनस्ताः ॥१८
वेदकरेऽस्मिन् सिन्धुरतर्काब्ध्यङ्गुलतारोत्सेधयुताः स्युः ।
षट्करमात्रेऽस्मिन् दशवस्वृत्वङ्गुलतारोत्सेधसमेताः ॥१९॥
भास्करपंक्तिगजाङ्गुलतारोत्सेधयुताः स्युरिमा वसुहस्ते ।
नाभिमिहाम्बुजवच्च विदध्यादष्टदलं सह कर्णिकयान्तः ॥२०॥
मुष्टिमात्रे रसाम्भोधिनेत्राङ्गुलायामतारोन्नतिर्योनिरुक्ता बुधैः ।
नेत्रवेदाङ्गुलोत्सेधतारान्विता नाभिरप्यत्र योन्यग्रमेकाङ्गुलम् ॥२१॥

यान्यामेतद्वदितं रत्निमात्रस्य कुण्डस्य ।
यन्मयोक्तं तदेव खलु हस्तमात्रस्य ॥ २२ ॥

---

एकांशेन बहिर्वर्ध्वयित्वा पुनस्तेनैव मानेन परितो वृत्तं भ्रामयेत् । पुनरपि चतुरस्रं चतुःषष्ठधा विभज्य तेष्वेकत्रिंशदंशं परित्यज्य अवशिष्टेन त्रयस्त्रिंशदंशेन वृत्तरेखां सप्तधा प्रणीय सप्तचिह्नानि कृत्वा सप्तसूत्राण्यास्फालयेत् । एवं सप्तकोणम् असंकुचिताग्रं कुर्यादिति ॥ १४ ॥

खातमानमाह यावदिति । युगं चत्वारि अर्पितं तांगुलं नेत्रं द्वांगुलं सिन्धुवाची तर्काः षट् अब्धयश्चत्वारः । नाभिप्रसरमाह नाभिमिहेति ॥ अन्तः कुण्डमध्ये योनिप्रकारमाह मुष्टीति । दैर्घ्यरणविस्तारः नेतरः षट्चतुर्द्वांगुलायामः यथासंख्यम् । नाभिमानमाह नेत्रेति । योन्यग्रहमाह योन्यग्रमिति योनिकुण्डे योनिं पद्मकुण्डे नाभिश्चाविहिते इत्याह इत्येकांगुल इत्यादि

एकैकेनाङ्गुलीनामलनिशितमतिर्वर्द्धयेदन्यकुण्डेष्वेतां
योनिञ्च नाभिं खलु यवयुगलेनेह योन्यास्तथाग्रम् ।
कुर्याच्चाभिञ्च वृन्ताकृतिमपि यदि वा कुण्डरूमस्वरूपम्
योन्याकारेऽत्र योनिं सरसिजसदृशे नो विदध्याच्च नाभिम् ॥ २३ ॥
कुण्डस्यैके हस्तमात्रस्य योनिं प्राहुर्भूताग्न्यङ्गुलायामताराम् ।
व्यासस्यैकांशकोत्सेधयुक्तां कुर्याद्बोधिक्ष्माजपत्रानुरूपाम् ॥ २४ ॥
नेत्रभूताङ्गुलोत्सेधतारान्वितां नाभिमंशद्वये तद्दलानि ।
व्यासवह्न्यंशतोऽंशेन तत्कर्णिकां मध्यभागे विदध्याद्बुधः कुण्डतः
कुण्डस्यैककरस्य चारु परितो नेमिर्भवेदङ्गुले-
नैकेनैव ततो विलोचनकरादारभ्य संवर्द्धयेत् ।
कुण्डे दिक्करकुण्डकावधि बुधः प्रत्येकमर्द्धाङ्गुलम्
तद्बाह्ये खलु मेखलात्रितयकं कुर्याद्यथोक्तक्रमात् ॥ २६ ॥
शतार्द्धहोमे खलु मुष्टिमात्रमरत्निमात्रं शतहोमकुण्डम् ।
हस्तं सहस्रे त्वयुते द्विहस्तं लक्षे चतुर्हस्तमिदं प्रदिष्टम् ॥२७॥

---

विदध्याच्च नाभिमित्यन्तेन च । कुण्डस्येति एके आगमविदः हस्तपरिमित-कुण्डस्य योनिमानम् अन्यथा वर्णयन्ति भूत-अग्नि-अंगुलायामताराम् । व्यासः आयामः तस्मिन् आयामे तां षट्संख्यां षडंगुलां बोधिक्ष्माजपत्रानु-रूपाम् अश्वत्थपत्राकाराम् एतदुक्तं भवति । एकहस्तमात्रस्यषडंगुलविस्तृतां द्व्यङ्गुलोन्नतामश्वत्थपत्रवत् ॥ १५-२४ ॥

नेत्रेति । द्व्यंगुलपञ्चांगुलैरुत्सेधतारान्वितां कुर्यात् । भागद्वयेऽष्टदलानि च व्यासस्य विस्तारस्य वह्न्यंशभागेन तृतीयभागेन मध्यकुण्डे कर्णिकां कुर्यात् । एकहस्तकुण्डस्य परितः सर्वत्र एकेन अंशेन अनेन नेमिः एवं विलोचनात् द्विकरादारभ्य वर्द्धयेत् । एवं दिक्करकुण्डावधि दशहस्तकुण्डपर्यन्तं प्रत्येकम् अर्द्धाङ्गुलं न वर्द्धयेत् । तद्बाह्ये खलु मेखलात्रितयं कुर्यात् ॥२५-२६॥

दशलक्षे रसहस्तं वसुहस्तं कोटिहोमे स्यात् ।
कोट्यर्द्धे चाष्टकरं होमेष्वागमविदो ब्रुवते ॥ २८ ॥
केचिद्धस्तं लक्षहोमे द्विहस्तं लक्षद्वन्द्वे वह्निलक्षे त्रिहस्तम् ।
होमे कुण्डं वेदलक्षेऽब्धिहस्तं प्राहुर्दोष्णां पञ्चकं पञ्चलक्षे ॥ २९ ॥
वसुलक्षे वसुहस्तं सप्तकरं सप्तलक्षे स्यात् ।
वसुहस्तं वसुलक्षे नवलक्षे नवहस्तम् ॥ ३० ॥
दशहस्तं दशलक्षे दशकरमेवेह कोटिहोमेऽपि ।
दशहस्तान्नहि कुण्डं परमस्ति महीतलेऽमुष्मिन् ॥ ३१ ॥
सर्वसिद्धिकरमम्बुधिकोणं पुत्रदं मनसिजालयमथोक्तम् ।
अर्द्धचन्द्रसदृशं शुभदं स्यादग्निकोणमरिमर्दनहेतुः ॥३२॥
शान्तिकर्मणि भवेत् सुवर्त्तुलं छेदमारणकरं षडस्रकम् ।
पद्मकुण्डमिह व्युष्टिकारकं रोगशान्तिकरमष्टकोणकम् ॥ ३३ ॥
चतुरस्रं विप्राणां राज्ञामिह वर्त्तुलं कुण्डम् ।
वणिजामर्द्धशशाङ्काकारं त्र्यस्रं तु शूद्राणाम् ॥ ३४ ॥
चतुरस्रं सर्वेषां प्रशस्तमिति केचिदाहुराचार्याः ।
वाञ्छितफलदं यज्ञकुण्डं द्वयमपि भुक्तिमुक्तिकरम् ॥३५॥
षट्कोणमर्द्धचन्द्राकारञ्चापि प्रज्ञाकरकुण्डम् ।
मुक्तिकरं पञ्चास्रं हयकोणञ्चेह राज्यदा योनिः ॥ ३६ ॥
इति श्रीत्रिपुरासारसमुच्चये नवमः पटलः

---

होमसंख्यानुरूपकुण्डमाह शतार्द्धेति । द्विहस्तमयुते द्विहस्तं हस्तकुण्ड-कोणसूत्रपरिमितं तथाच सूत्रप्रमाणेन द्विहस्तकुण्डमुद्धरेत् । एकहस्तस्य कुण्डस्य कर्णसूत्रप्रमाणतः । द्विहस्तमुद्धरेत् कुण्डमेवं तन्त्रविदो विदुः ॥ २७-३१ ॥

काम्यविशेषे कुण्डविशेषमाह सर्वसिद्धिकरमिति । मनसिजकरसंख्यात-

# दशमः पटलः

नित्ये नैमित्तिके च प्रचिमलमतयः प्राहुरेकेऽग्धिकोणम्
कुण्डं हस्तप्रमाणं स्मरगृहसदृशं चाथ वृत्तं प्रशस्तम् ।
षट्कोणं चार्द्धदोषाकरसदृशमथ स्थण्डिलं रत्निमात्रा-
यामं चाङ्गुष्ठपर्वोन्नतमपि सुषमं निर्मितं वालुकाभिः ॥ १ ॥
चतुष्कोणमभ्यङ्ग लोत्सेधमेके बुधा हस्तविस्तारयुक्तं तदाहुः ।
ततः शोधनं क्षालनं चापि कुर्यात्तथा प्लावनं चापि कुण्डस्य विद्वान्

तिस्रस्तत्र लिखेदुदग्गतशिखारेखाहृदा वर्हिषा
प्रागग्राश्च तथा चतुर्मुखयमश्यामाकरा देवताः ।
तासां वृत्ररिपोर्हरिद्गतशिखायामध्यसव्योत्तराः
श्रीशाद्रीशसुराधिपा इति तथा प्रागग्ररेखाधिपाः ॥ ३ ॥

---

योनिकुण्डं जातिविशेषे कुण्डविशेषमाह चतुरस्रमिति ॥ ३२-३६ ॥
इति श्रीत्रिपुरासारटीकायां पदार्थादर्शे नवमः पटलः ॥ ९ ॥

---

एवं मण्डपकुण्डविधानानन्तरं स्थण्डिलविधानं होमविधानञ्च वक्तुमुपक्रमते नित्येत्यादिना । नित्ये नैमित्तिके हस्तप्रमाणं कुण्डमाचार्याः प्राहुः । वालुकानिर्मितस्थण्डिलप्रमाणमाह स्थण्डिलमिति ॥ १ ॥

कुण्डशोधनप्रकारमाह तत इति, कुण्डं स्थण्डिलं च कृत्वा नखकेशबालाश्मादीन् संशोध्य गोमयाम्भसा कुण्डमुपलिप्य स्थण्डिलं चाभ्युक्ष्य वायुबीजेन संशोध्य वरुणबीजेनाप्लावनं कृत्वा हृदा हृदयमन्त्रेण नम इति मन्त्रेण वर्हिषा द्विगुणितकुशेन दक्षिणाग्रं पश्चिमादिपूर्वाग्रक्रमेण रेखात्रयं विलिख्य तासां दक्षिणादुत्तराग्रेषु मध्यपश्चिमपूर्वभागगतानां क्रमेण ब्रह्मयमसोमाः पश्चिमादिपूर्वाग्रेषु मध्यदक्षिणोत्तराणां दिशः श्रीशसुराधिपादेवताः स्मरेत्

अभ्युक्ष्य मूलेनाम्भोभिर्गन्धाद्यैस्तस्य मध्यमभ्यर्च्य ।
इह नीलनीरदाभां ध्यायेद्वागीश्वरीमृतुस्नाताम् ॥ ४ ॥

जातं मार्त्तण्डकान्ताद्धुतवहमरणेः श्रोत्रियागारतो वा
क्षेत्रान्निक्षिप्य पात्रे वरकनकमये ताम्रपात्रेऽथवापि ।
मृत्पात्रे वा निधायामलविपुलमतिर्वह्निबीजेन मन्त्री
क्रव्यादांशं त्यजंस्तत्तदनु च मनुना शोधयेदस्त्रकेण ॥५॥

कवचेन ततोऽवगुण्ठ्य पश्चाद्यतात्मा परिदर्श्य धेनुमुद्राम् ।
अमृतीकरणं ततो विदध्याज्जलबीजेन सबिन्दुना कृशानोः ॥ ६ ॥
प्रादक्षिण्यात्त्रिः परिभ्राम्य सम्यग्वागीश्वर्याः कुण्डमध्ये स्थितायाः
योनावेनं विन्यसेत्स्वाभिवक्त्रम् पश्चादग्निं मूलमन्त्रेण मन्त्री ॥७॥

हृन्मन्त्रेण समाहितोऽथ जुहुयादाज्येन सप्ताहुती-
र्गर्भाधानमिदं सितेतरगतेः सम्यक्कृतं स्यादिह ।
एवं पुंसवनं ततो वितनुयान्मन्त्री तु सीमन्तकम्
तेनैवास्य तु जातकर्मविधिना वह्नेर्विदध्यादिह ॥८॥

---

ततो दक्षिणभागेनगन्धपुष्पाक्षतादीनि होमद्रव्याणि संस्थाप्य वामभागे पूर्वाग्रान् दर्भानास्तीर्य तदुपरि यथोक्तनिपातान् तीर्थजलेनापूर्य पूर्वोक्तद्रव्यजातम् । पात्राणि च पूर्वोक्तमन्त्रेण सम्प्रोक्ष्य कुण्डस्थण्डिलयोरन्यतमे मध्ये गन्धादिभिरभ्यर्च्य ॥ २-३ ॥

वागीश्वरीमृतुस्नातां वागीश्ववरेण संयुक्तां द्विभुजाम् उत्पलधारिणीमिति ध्यात्वा ॥ ४ ॥

सूर्यकान्तसम्भवं अरणेः श्रोत्रियगेहाद्वा एकमग्निमानीय वह्निबीजेन पात्रे निधाय क्रव्यादने किञ्चिद्दारुखण्डं परित्यज्य अस्त्रेण संछाद्य ॥ ५ ॥

कवचेनावगुण्ठ्य अमृतबीजेन धेनमुद्रया अमृतीकृत्य उत्थाप्य प्रादक्षिण्यक्रमेण स्थण्डिलकुण्डं परिभ्राम्य स्वसम्मुखं कृत्वा स्ववीजबुद्धया कुण्डमध्ये देव्या योनौ तत् समर्पयेत् ॥ ६-७ ॥

ततः सप्तहस्तं त्रिपादं द्विशीर्षं चतुर्भिर्विषाणैस्त्रिधाबद्धमिद्धम् ।
पिशङ्गैर्युतं लोचनैस्तर्कसंख्यैर्विनाशं रणन्तं चतुःश्रोत्रमग्निम् ॥९॥
रक्ताम्बुजास्यं परिलम्बितैकपादञ्च पृष्ठेन गतं वृषेन्द्रम् ।
स्वसम्मुखं दक्षिणगैश्चतुर्भिर्वामैस्त्रिभिर्बाहुभिरप्युपेतम् ॥१०॥
शक्तिं रन्ध्रं स्रुक्स्रुवौ सव्यहस्तैर्वामैर्हस्तैस्तोमरं तालवृन्तम् ।
सर्पिः पूर्णं तप्तसौवर्णवर्णं पात्रं स्वाज्ञ्च सप्तजिह्वां दधानम् ॥११॥
या सा हिरण्या कनका च रक्ता कृष्णा च सव्याननगा रसज्ञा ।
या सुप्रभाख्या रसनातिरक्ता वामाननस्था बहुरूपिका च ॥१२॥

---

तत्र योगपीठमभ्यर्च्य पश्चाद्देवस्य देव्याश्च दद्यादाचमनादिकम् । ज्वालयेन्मनुनानेन तमग्निमथ देशिकः । ॐ चित् पिङ्गल हन हन दह दह पच पच सर्वाङ्गानि ज्ञापय स्वाहा । अग्निं प्रज्वलितं वन्दे जातवेदो हुताशनम् । सुवर्णवर्णममलं समिद्धं सर्वतो मुखम् । उपतिष्ठेत विधिना मनुनानेन पावकम् । विन्यसेदात्मनो देहे मन्त्रीजिह्वाहविर्भुजः । लिङ्गपायुशिरोवक्त्रघ्राणनेत्रेषु सर्वतः । वह्निरर्घीशसंयुक्ताः सादिवर्णाः सबिन्दवः । तेन स्यूं भ्रूं श्रूं ब्लूं य्यु-मर्णामन्त्राः समुद्दिष्टा जिह्वाग्नेः सप्तदेशिकैः । पूर्वोक्तहृन्मन्त्रेण गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मणां प्रत्येकं सप्ताहुतीः कृत्वा तत्र गायत्रानुष्टुब्बृहतीपंक्तित्रिष्टुब्जगतीच्छन्दोमयसप्तधातुम् ॥ ८ ॥

गार्हपत्याहवनीयदक्षिणाग्निमयं त्रिपादं यजमानं प्रत्यात्मकं द्विशीर्षं चतुःशृङ्गम् । वेदचतुष्टयं चतुःस्कन्धं प्रातर्मध्याह्नसायमिति शवलत्रयबद्धशरीरं वेदालोकाय पञ्चरात्रबोद्धार्द्धम् । हव्यस्यात्मकं विना पुंसवनत्रयेषु ऋग्यजुःसामाथर्वात्मकं चतुःश्रोत्रं जङ्गमदीप्यमानवपुषं वृषेन्द्रस्यपृष्ठेन गतं वृषेन्द्रस्य पृष्ठगतं तथालम्बितकपालकपालम्, अधः दक्षिणभागैश्चतुर्भुजैः शक्तिं वीजं स्रुवस्रुवौ । वामकरैस्त्रिभिस्तोमरतालवृन्तं घृतर्णपूर्णसौवर्णपात्रञ्च दधानमित्यादि ॥ ९-११ ॥

सुतप्तचामीकरचारुवर्णा स्थिता हिरण्या दिशि शूलपाणेः ।
वैदूर्यवर्णा कनकाभिधाना या सा निषण्णा दिशि वासवस्य ॥१३॥

या रक्ता तरुणदिवाकराभवर्णा सा
जिह्वा हरिति सुसंस्थिता कृशानोः ।
या कृष्णा विकसितनीलनीरजाभा
सा रक्षः परिवृढदिग्विभागलग्ना ॥ १४ ॥

पद्मरागसदृशप्रभोज्ज्वला सुप्रभा वरुणदिश्यवस्थिता ।
या महारजतपुष्पसन्निभा गन्धवाहदिशि सातिरक्तिका ॥१५॥
यथार्थसंज्ञा बहुरूपिका या जिह्वोत्तरे दक्षिणतः स्थिता सा ।
कुण्डस्य मध्ये त्वथ सा प्रशस्ता जिह्वा हिरण्या भुवि कार्मणादौ १६
स्तम्भनादिषु मता कनकाख्या द्वेषणादिषु मता खलु रक्ता ।
मारणे निगदिता भुवि कृष्णा सुप्रभा बुधवरैरिह शान्त्याम् ॥१७॥

उच्चाटनेऽतिरक्ता या बहुरूपोत्तरे सिद्धिम् ।
ऋद्धिं दक्षिणतः सा तनुते मध्ये शुभानि सदा ॥ १८ ॥
अन्ये त्वागमपारगामलधियः प्राहुर्बुधाः सुप्रभाम्
वृत्रारेः ककुभि स्थितां पितृपतेः कृष्णां हिरण्यां पुनः ।
वारुण्यां बहुरूपिकां पुरभिदो रक्तामुदीच्यां श्रितामाग्ने-
यामतिरक्तिकाञ्च कनकां कुण्डस्यमध्ये स्थिताम् ॥ १९ ॥
जिह्वान्तु हिरण्याख्यां शान्तिकर्मणि तथा कनकाख्याम् ।
रक्तां कार्मणकर्मणि कृष्णां क्षुद्रक्रियासु बुधः ॥ २० ॥

या सुप्रभेति गदिता तामाहुर्मोक्षकारिणीं जिह्वाम् ।
अतिरक्तामाकृष्टौ बहुरूपामखिलसिद्धिदां जिह्वाम् ॥ २१ ॥

---

जातवेदसं ध्यात्वार्घ्यपाद्यादिधूपदीपान्तैरुपचारैरभ्यर्च्य ततः प्रागग्रैरुदगग्रैर्दर्भैरेकमेखलाकुण्डे मेखलाधस्तात् । द्विमेखले द्वयोर्मध्ये त्रिमेखले मेखलायां परिस्तीर्य यदि स्थण्डिले तदा दक्षिणोत्तरपश्चिमभागेषु त्रीन् परिधीन्

सर्वालङ्करणान्वितां सर्वकर्मस्वेवं रूपं साधकश्चित्रभानुम् ।
सम्यग्ध्यायेत् सप्तजिह्वाभियुक्तं ज्ञात्वा वाग्यतोऽस्तानवक्त्रम् ॥२२॥
कुर्यान्मन्त्री जातकर्मावसाने पाद्यार्घ्याद्यैरर्चयित्वा यथावत् ।
हृन्मन्त्रेणाज्याहुतीः सप्त कृत्वा श्रीमन्नामामुष्य धूमध्वजस्य ॥२३॥
प्रागग्रैरुदगग्रैः परिस्तरेदथ कुशैः सम्यक् ।
पक्वमेखलकुण्डे निशितमतिर्मेखलाधस्तात् ॥ २४ ॥
परिस्तरेद्द्विमेखले द्वितीयमेखलोपरि ।
त्रिमेखले तु मध्यमेखलोपरि परिस्तरेत् ॥ २५ ॥
स्थण्डिलके सिकतानामग्रे पार्श्वेऽथ विन्यसेत् परिधीन् ।
कुण्डस्य दक्षिणोत्तरपश्चिमभागेषु साधको मतिमान् ॥ २६ ॥
होतुः पूर्वं पूर्वभागं प्रदिष्टं सव्यं भागं दक्षिणं भागमग्नेः ।
वामं विद्यादुत्तरं भागमग्र्यं प्रज्ञावद्भिः पश्चिमं भागमुक्तम् ॥२७॥
ततो वामभागे परिस्तीर्य दर्भान्पुलोमात्मजावल्लभाशागताग्रान् ।
तदूर्ध्वंन्यसेत्द्वन्द्वरूपेण पात्राण्यथोऽधोगतास्यानि सर्वाणि धीमान् ।
सौवर्णान्यपि राजतान्यपि तथा पात्राणि शौल्वानि वा
मृत्पात्राण्यपि शान्तिकादिषु परं शस्तानि कर्मस्विह ।
शैल्वक्षद्रुमशिग्रभूरुहकृतान्येतानि विद्वेषणोच्चाटो-
च्छादनमारणादिषु भृशं शस्तानि पात्राण्यपि ॥ २९ ॥

---

विन्यस्य अभिषिच्य ततो गर्भाधानं पुंसवनं सीमन्तोन्नयनं पुनः । अनन्तरं जातकर्म स्यान्नामकरणं तथा । उपनिष्क्रमणं पश्चादन्नप्राशनमीरितम् । चौडोपनयने भूयो महानग्निमहाव्रतमित्यादि । प्रयोगान्ते मङ्गलनाम्नोऽग्नेर्गर्भाधानं करोमि नमः स्वाहा इत्यादि । तथाच शतं मङ्गलनामानं कुण्डेऽग्निस्दापनं तथेति । उत्तरे सिद्धिर्मिति दक्षिणतः स्थिता सा उत्तरे मध्ये ऋद्धि सिद्धिश्च तनुते । श्रीमन्नामेति अमुष्ज धर्मध्वजस्य वह्नेः श्रीमन्नामासि मङ्गलनामासीति शारदातिलके राघवभट्टः । परिधीनिति प्रादेशद्वय-

अथोत्तानितेष्वेषु पात्रेषु विद्वाञ्जलेनैकमापूर्य तीर्थानि तत्र ।
सुसञ्चिन्त्य तैः प्रोक्षयेत्कूर्चदर्भैस्तदा सव्यभागस्थितं द्रव्यजातम् ।
कृतघृतशुद्धिः प्रविमलबुद्धिर्जुहुयादाहुतिसप्तकमत्र ।
अन्नप्राशसनमथचूडोपनयनयोरपि विदधीतेत्थम् ॥ ३१ ॥
गोदानमङ्गलादिषु सर्वेषु सहृदयेन ।
तेनैव समावर्त्तनविवाहयोराहुतीर्जुहुयात् ॥ ३२ ॥
असूनिति सुसंस्कृते कृशानौ विधिना पूर्वसमीरितासनं तत् ।
परिकल्प्य यथावदर्चयेत्तां परिवारेण सहाम्बिकामथात्र ॥३३॥
परिवारस्थंकैकां देव्याश्च दशाहुतीर्जुहुयात् ।
एवं भैरव्यग्निर्जनितः स्याद्धोममाचरेताथ ॥ ३४ ॥
पालाशैर्मधुरत्रयेण कुसुमैः सिक्तैरशेषान्नरः
कामांश्चरुपकपाटलाविचिकिलैः प्राप्नोति होमश्रियम् ।
राज्यं विल्वदलैः फलैरपि तथा सामान्यमम्भोरुहै
र्वायुः शाद्वलपल्लवैः सह गुडैः शान्ति लहाज्यैस्तिलैः ॥३५॥
अघोरेण द्रविणं विगदत्वं प्राप्याच्च सिद्धार्थैः ।
प्रीतिं प्रियङ्गुपत्रैः पुत्रान्सौख्यं फलैर्मनुजाः ॥ ३६ ॥
लाजैः सौभाग्यं धान्यहोमेन होमात्पुष्पैर्यक्षलोकाधिपत्यम् ।
मत्स्यैः पुन्नागैरतिविद्याधरत्वं पुष्पैर्मालत्याः सिद्धगन्धर्वलोकान् ।३७

---

परिमितयज्ञीयकाष्ठं शेलुः वृक्षविशेषः । शेलुः श्लेष्मातकः शीत उद्दालो बहु-वारकः इत्यमरः । क्षुद्रमंशाता इति यस्य प्रसिद्धिः । ह्रस्वशाखः शिफः क्षुप इत्यमरः । शिग्रुः शैलज इति ख्यातो । विचिकिलः पुष्पविशेषः वन्धुजीव इति केचित् । कासमर्दः कालकासुन्दापुष्पैः । किञ्चिरातः पुष्पविशेषः छाग-लाङ्गजं छागमांसं जङ्गलो द्रव्यविशेषः पूर्ववत् । अथवेति अरिवलं शत्रुवलं पराङ्मुखं स्यात् मधुराकेन महापललं महामांसम् अतएव वैद्यकशास्त्रे ब्राह्मणे च तथा तैले मांसे चेत्यादिषु महच्छब्दो न दीयते, तथा, कटुत्रय-

आकृष्टिर्यक्षिणीनां त्रिमधुरसहितैरञ्जुलैः सर्षपैः स्याद्
वेश्या वश्या भवेद्युहयरिपुकुसुमैः किंशुकैश्चापि होमात् ।
वश्याः स्युः कर्णिकारैरथ धरणिसुराः क्षत्रियाः कासमर्दै-
र्वैश्यानां कङ्किरातगेण इह वशगाः पाटलाभिश्च शूद्राः ॥३८॥
छागलाङ्गजजाङ्गलहोमात्परराष्ट्रं स्ववशं भवेदशेषम् ।
अथवारिबलं पराङ्मुखं स्यान्मधुरासक्तेन महापललेन वापि ॥३९॥
कटुत्रयपत्रनिम्बकेशैः सगुडैर्नारपलान्वितैर्निशासु ।
कटुतलविमिश्रितैश्च होमादरयस्त्रिमुनिवासरान्म्रियन्ते ॥४०॥
नग्नजिदस्थ्यजरा हरिद्राकण्डनर्कोविहितः किल होमः ।
सप्तदिनात्प्रतिपक्षनृपाणां स्तम्भनकृत्प्रबलस्य बलस्य ॥ ४१ ॥
माषैर्मूकत्वं कोद्रवैर्व्याधिबाधाम् आतङ्कार्तिः स्यात्कलायैस्तु होमात्
उन्मत्तः स्यादक्षजाभिः समिद्भिर्मृत्युः सप्ताहाच्छाल्मलीवृक्षजाभिः
कपिलाघृतसंयुतैर्मनुष्यो यवनाधूमतिलैः षडस्रकुण्डे ।
नियुतं खचरत्वमेति हुत्वा निशि चारेण समाहितान्तरात्मा ॥४३॥
पलाशस्य काष्ठैः परिज्वाल्य हव्यासनं चन्दनाम्बूक्षितैर्बन्धुजीवैः ।
समस्तानि भूतानि वश्यानि होमाद्भवेयुः प्रियङ्गुप्रसूतैश्च तद्वत् ४४
नरो भक्ष्यभोज्यान्नपानानि हुत्वा परां सम्पदां प्राप्नुयादत्र लोके ।
वटोडुम्बराद्यंकुरैः स्वादुवर्गान्वितैः कल्पतां मल्लिकाभिर्यशः स्यात्
तुष्टिर्नीलाम्बुजैर्होमात्स्यादाचारेण स्वशक्तिमुपेतुम् ।
घृताहुतिद्विगुणितषोडशाङ्गुलोन्नतिवरा तत इह मध्यमार्द्धतः ॥४६॥

---

निम्बपत्रकेशैर्नारपलान्वितैः नरमांसैर्होमात् अरयः त्रिसप्तवासरात् एकविंशतिदिवसात् प्राक् म्रियन्ते । तथा नग्नजिदस्थिकार्पासबीजं केचिद्रुद्राक्षफलम् अजलोम हरिद्राखण्डनर्कोविहितो होमः सप्ताहात् प्रतिपक्षनृपाणां स्तम्भनकृत् प्रबलस्य मांसहोमात् सुकरम् । अक्षजाबहेड़ासमिद्भिः निशिचारेण इडायां वायौ गते ॥ १२-४४ ॥

गजाङ्गुलोन्नतिरधमा तिलोद्भवं तथैव माध्विकमपि पञ्चगव्ययुक् ।
एकं चुल्लकं पयसो दध्नो रसमैक्षवञ्च तद्वत् ॥ ४७ ॥

एकैकापूपलिकाप्यसमक्षप्रमाणञ्च ।
कदलीफलमेकैकं नागरङ्गं मातुलुङ्गञ्च ॥ ४८ ॥
पनसं दशखण्डं स्याद्गुणखण्डं स्यात्फलं वैल्वम् ।
कर्कटिकागुणखण्डात् दलपुष्पफलान्यखण्डानि ॥ ४९ ॥
चतुरङ्गुष्ठसमानव्यञ्जनपिण्याककृशराश्च ।
चुल्वकार्द्धा हि तिलाः प्रसृतिमिताः शक्तवो गदिताः ॥५०॥
लाजाः स्युर्मुष्टिमिताः कर्षार्द्धाः सर्षपाः प्रोक्ताः ।
कर्षप्रतिमा मुद्गा माषाश्च व्रीहयो मुष्टिमिताः ॥ ५१ ॥
षोडशनरपतिमाषा गोधूमाश्च रक्तशालयस्तद्वत् ।
सप्ताष्टौ वाथ वा यवाः पञ्चशो भणिताः ॥ ५२ ॥
अर्द्धपलं गुडमानं मुष्ट्यर्द्धं तण्डुलाः प्रोक्ताः ।
कुंकुममृगमदचन्दनघनसाराश्चनकमात्राः स्युः ॥ ५३ ॥
वदरफलप्रमाणं पुरं द्विखण्डं कपित्थफलकम् ।
श्लेष्मातकं पिशाचतरुं त्यक्त्वान्येभ्यः समाहरेत्समिधः ॥५४॥

---

द्रव्यपरिमाणमाह । घृताहुतिद्विगुणितषोडशांगुलोन्नतिः द्वात्रिंशदंगुलोन्नतिर्घृतधारा एवम्भूता आहुतिर्वरा श्रेष्ठा अर्द्धेन मध्यं तथा तिलोद्भवं तैलं माक्षिकं मधु पञ्चगव्यं मूकत्वहरणे तथैव पूर्ववज्ज्ञेयम् । उडुम्बराग्रान् उडुम्बरसमिधः तथा एकमेकं जुहुयात् । व्यञ्जनं सूपादि पिण्याकमन्नं कृशरास्तिलतण्डुलाः चतुरंगुलसमानाः चतुःपूर्वपरीताः । कर्षार्द्ध इति अशीतिगुञ्जापरिमितशास्त्रोक्ततोलकद्वयं कर्ष इति अतएव श्रुवलक्षणे कर्षाद्युग्राहि तच्छिर इत्युक्तं कर्षद्वयं शुक्तिः । षोडशमाषकपरिमिता राजमाषाः । रेणुयवाः चूर्णयवाः पुरं गुग्गुलुः श्लेष्मातकं पूर्वोक्तवृक्षविशेषः । पिशाचतरुः

गोपुच्छमीषिकांश्च त्यक्त्वान्यतृणं परिस्तरणम् ।
पयांसि हिरण्यायां चरुमाधारांश्च कनकायाम् ॥ ५५ ॥
बहुरूपायां जुहुयात्सिद्धार्थयवांश्च रक्तायाम् ।
कृष्णायामिह लाजान्शंकून्वैशुप्रभायाञ्च ॥ ५६ ॥
अतिरक्तायां तु तिलान्सर्वद्रव्याणि कनकायां वह्नेः ।
कर्णे होमे व्याधिबाधा नेत्रेऽन्धं नासिकायाञ्च व्याधिः ॥ ५७ ॥
द्रव्यच्छेदो मस्तके स्यान्मुखान्तर्होमं कुर्यात्तेन नित्यं विपश्चित् ।५८
भेरीवारणवारिदध्वनिनिभो वह्नेर्ध्वनिः शोभनो-
वर्णः स्वर्णनिभः शुभोदयकरः सिन्दूरवर्णः समम् ।
उद्यद्भास्करसन्निभश्च घुसृणक्षौद्रेन्द्रगोपारुणो
गन्धश्चम्पकपाटलाविचिकलराज्येन तुल्योऽपि च ॥ ५९ ॥
पुन्नागनागकेशरगुग्गुलुगन्धोपमश्च सिद्धिकरः ।
छत्राकारा तु शिखा शिखिनः शुभदाथ कल्पना च भवेत् ॥६०॥
धूमोऽग्नेः कुन्दनिभः शुभफलदः काशकुसुमसङ्काशः ।
खरवायसरवसदृशो वह्नेः शब्दो विनाशकरः ॥ ६१ ॥
कृष्णो हुतवहवर्णो यजमानं नाशयेदचिरात् ।
पिङ्गो बहुरोगकरो रौप्याभो राष्ट्रहानिमपि तनुयात् ॥ ६२ ॥
विष्ठासदृशो गन्धो वह्नेर्दुःखानि विदधाति ।
मूत्रसमो बलहानिं स्वेदजे शुभविनाशनं कुर्यात् ॥ ६३ ॥

---

बहेड़ा । गोपुरमीषिकान् तृणविशेषान् त्यक्त्वा अन्यतृणपरिस्तरणम् एधांसि सप्तजिह्वायां पृथग् द्रव्येण होतव्यं तदेवाह हिरण्यायां चरुं कनकायाम् आधारं तत्घृतं दद्यात् । कर्णादिहोमे भूषणमाह वह्नेरिति ॥ ५५-५६ ॥

वह्नेर्ध्वनिफलमाह भेरीति । भेरी वाद्यविशेषः वारणो हस्ती । वर्णफल-माह वर्ण इति । अस्त्रेण अस्त्रमन्त्रेण चक्रपूजां दशदिग्बन्धनञ्च कुर्यात् ।

विच्छिन्नाग्नेर्मृत्युं शिखा सुवृत्ता करोति बलहानिम् ।
शुकपिच्छाभो धूमो वह्नेर्वाहानिहाशु नाशयति ॥ ६४ ॥
कुर्यात्कपोतसदृशः कृपारयोनिर्गवां नाशम् ।
आवर्त्तः शुभफलदः प्रदक्षिणो वीतिहोत्रस्य ॥ ६५ ॥
विद्युत्पाते दर्दुरे विस्फूलिङ्गे आनर्थ्यं स्याद्धोमकाले कृशानोः ।
वामावर्त्तो विग्रहो हासयुक्त होतुर्भीतिः सम्भवेद्भूतसङ्घात् ॥६६॥
वस्वधिकं शतमाज्यैर्जुहुयात् शान्तिकामेषु दोषेषु ।
अक्षेण साधकेन्द्रस्तनुयादथ चक्रपूजाञ्च ॥ ६७ ॥
वशो भवत्यवश्यं भूमिपतिर्लक्षहोमेन ।
लाक्षार्द्धेनामात्यः सामन्तो लक्षपादेन ॥ ६८ ॥
षड्भिः सहस्रैर्भूपतिपत्न्यो वश्यास्तदीयपुत्राश्च ।
एकसहस्रहोमात्सुभगा गणिकाश्च वश्याः स्युः ॥ ६९ ॥
नियुतैर्दशभिर्भवन्ति सर्वे वशा नाकसदः सुरेन्द्रमुख्याः ।
नियुतैस्त्रिभिरेव देवपत्न्यो मुनयश्चापि अथान्यदेवता ॥ ७० ॥
गन्धर्वसिद्धचारणगणाप्सरसो हृषीकलक्षेण ।
विंशतिलक्षैर्वशगा भवन्ति विद्येश्वराः सर्वे ॥ ७१ ॥
नियुतैः शतार्धसंख्यैः सदाशिवाम्भोजनेत्रकमलभवाः ।
वश्या भवन्ति लक्षैः कोटिभिराप्नोति शाश्वतं धाम ॥ ७२ ॥
पूर्णाहुतिमथ हुत्वा पुररिपुदयितां विसृज्य दृढभक्तिः ।
तदनु समाहितबुद्धिः स्वाहानाथं विसर्जयेन्मन्त्री ॥ ७३ ॥
सपरिस्तरानजुहोमे नित्ये परिधींश्च दहेन्मतीमान् ।
नैमित्तिके तु होमे परिधीन्परिस्तरान्दहेन्मन्त्री ॥ ७४ ॥

---

दोषशान्तौ जपानन्तरं नित्यजपप्रकारमाह जन्मेति । जन्माधारगृहोदरात् मूलाधारकोटरात् अजमुखत्र्यस्रान्तमात्रान्तया अजमुखं मूलाधारस्थब्रह्मरन्ध्रं तदन्तर्गतं त्र्यस्रं तदन्तर्गतमात्रया तेजोरूपसूक्ष्मशिखया आवृत्त्या पौनःपुन्ये

सुधाकरे चाथ समर्च्य देवीं नृत्यैश्च गीतैः स्तुतिभिः प्रणम्य ।
उद्वास्य मूलेन गुरूपदिष्टकादम्बरीभिर्जुहुयान्मनस्वी ॥ ७५ ॥

जन्माधारगृहोदरादजसुध्यस्रान्तमात्रान्तथा
वृत्त्या जल्पति शक्तितन्त्रनियतः सूत्राक्षमालायुतः ।
मन्त्रश्च स्ववशोद्गतः प्रतिपदं तत्प्रत्यगाशासुखम्
लिङ्गश्च स्थितमव्ययं विजयते नित्यो जपात् त्रैपुरः ॥७६॥

इति श्रीनागभट्टविरचिते त्रिपुरासारसमुच्चये होमविधानं
नाम दशमः पटलः ॥

---

स्वरशो मन्त्रः प्रतिपदं प्रत्येकं द्रव्यं लिङ्गस्थितं लिङ्गत्रयोपरि यत्तेजः तस्योपरिस्थितं प्रत्यगाशामुखं सर्वतोमुखं तेजोविशेषणं जल्पति तद्बोधं करोति कीदृङ्मन्त्रः शक्तितन्त्रनिहितः कुशलः तथा सूत्राक्षमालायुक्तः सूत्ररूपाकारा अकारादिक्षकारान्तवर्णमालायुक्तः । एवं चिन्तनं नित्यजपरूपो भवति ॥ ५७-६७ ॥

इति श्रीगोविन्दाचार्यविरचितायां त्रिपुरासारसमुच्चयटीकायां
पदार्थादर्शे दशमः पटलः ।

समाप्तोऽयं ग्रन्थः

# श्लोकानुक्रमणिका

